# मधुरवाणी

## संस्कृतमासपत्रिका





लील...
सीताया ...
स्नेह...

चक्षुष्मन्तं रवीन्दुभ्यां श्रीभूभ्यां गृहमेधिनम् ।
वटपत्रफणीशाभ्यां सञ्चवन्तं नमो हरिम् ॥
अमरा भ्रमरायन्ते कमला वरटायते ।
यत्पादाम्बुरुहद्वन्द्वं वन्दे नारायणं परम् ॥
नमन्नीरधिजानेत्रद्वन्द्वनीराजितं सदा ।
नरकार्तिनिहन्तारं नमो नारायणं प्रभुम् ॥

सम्पादकः प्रकाशकश्च

पं. पण्ढरीनाथाचार्यः गलगली

वार्षिकं मूल्यम् (५) रूपकपञ्चकम्

१९५६ जानेवरी (पुष्य)मासस्य सञ्चिका गदग

## ❀ मधुरवाण्याः महासंरक्षकमण्डली ❀



## ::: अनुक्रमणिका :::



Printed at the Hombali Printery, Gadag
by H. S. Hombali and Published by Pandharinathacharya
Galagali at Gadag.

# मधुरवाणी

शके १८७७ ] श्री मन्मथसं. पुष्यसश्चिका [नवमोऽङ्कः

## मङ्गलाचरणम्

जनकः श्वशुरो यस्य सुमित्राद्याश्च मातरः ॥
नरं कश्चिन्नुमो लोक*मातृगामिनमन्वहम् ॥ १ ॥
देशो[1]ऽयमनुजो यस्य भार्या लाङ्गलपद्धतिः[2] ॥
तृणमेव[3] सुतोऽमुष्मै कस्मैचिन्महसे नमः ॥ २ ॥
लीलोत्तालित-हस्तलोलित-शिवेष्वासे तु निर्दालिते
सीताया ललितं मुदश्रुलुलितं रामानने कीलितम् ॥
स्नेहासिञ्चित-विस्मयांचित-नतभ्रूचंचदाकुञ्चितम्
प्रेम्णा चञ्चलितं दृगञ्चलमलं मोदप्रपञ्चाय नः ॥ ३ ॥
का त्वं भो ? जनकात्मजा ! ननु जनः सर्वः पितुर्ह्यात्मजः
वैदेही भुवि कोनु देहरहितः ! सैषास्मि रामाङ्गना ॥
स्त्रीस्त्रीत्थं पुनरुक्तमस्ति भुविजा किं कोऽपि वाऽकाशजः ?
एवं रामविनोदवादविजिता प्रीताऽस्तु सीता मम ॥ ४ ॥
अनन्तः शयनं यस्यानन्तमेव तथासनम् ॥
अनन्तैव च कांताऽपि सोऽनन्तोऽनन्तसम्पदे ॥ ५ ॥

## मासावतरणिका

हेमन्ते कामसामन्ते हन्त सीमन्तिनीजनाः
क्रामन्त्यो नीतिसीमान्तं दृश्यन्ते कलिदूषिताः ॥
यामिनीकामिनी भर्तुः दिवसस्याम्बरं महत्
आकर्षति बलात् शैत्यत्रस्तोऽसौ संकुचत्यतः ॥ १ ॥
अमृतं जीवनं नीरं विषमित्यद्य कथ्यते
आशुगोऽभूत् जगत्प्राणः पुष्यो दूष्यो विशिष्य तत् ॥
अथवा दाहकोऽप्यद्य पावको हितकारकः
आतपोऽपि सुखस्पर्शः पुष्यो दूष्यो न भाति मे ॥ २ ॥

* लक्ष्मीः 1 भरतः 2 सीता 3 कुशः

# सुभाषितरसास्वादः

आदिमध्यांतरहितं दशाहीनं पुरातनं ।
अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ ॥१॥

वामाङ्गीकृतवामाङ्गि कुण्डलीकृतकुण्डलि ।
आविरस्तु पुरो वस्तु भूतिभूत्यम्बराम्बरम् ॥२॥

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ॥
भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥३॥

गानाब्धेस्तु परं पारं नोपेयाय सरस्वती ॥
अतो निमज्जनभयात् तुम्बीं वहति वक्षसि ॥४॥

ग्रासाद्गलितसिक्थस्य किं गतं करिणो भवेत् ॥
पिपीलकस्तु तेनैव सकुटुम्बोऽपि जीवति ॥५॥

बन्धनस्थोऽपि मातङ्गः सहस्रभरणक्षमः ॥
अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥६॥

ऊर्णा नैष दधाति नापि विषयो वाहस्य दोहस्य वा
तृप्तिर्नास्य महोदरस्य बहुशो घासैः पलालैरपि ॥
हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते
को गृण्हाति कपर्दकैरमुमिति ग्राम्यैर्गजो हस्यते ॥७॥

सगुणैः सेवितोपान्तः विनतैः प्राप्तदर्शनः ॥
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥८॥

अन्तःकुटिलतां बिभ्रत् शङ्खः स खलु निष्ठुरः ।
हुङ्करोति यदाऽध्मातस्तदैव बहु गण्यते ॥ ॥९॥

राजं स्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः ।
मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥१०॥

प्रायेण धनिनामेव धनलोभो निरन्तरम् ।
पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ॥११॥

रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः ।
तदेव सन्तः सततमुत्सृजन्ति मलं यथा ॥१२॥

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ॥१३॥

दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि 'धनं धनं धनम् ।
इत्थमेव निनदः प्रवर्तते किं पुनर्यदि सचेतनो जनः॥१४॥

Telephone : 37553

Telegram: LANGUAGE




GOVERNMENT OF INDIA
OFFICIAL LANGUAGE COMMISSON

Royal Insurance Building,
12, J. Tata Road, Bombay 1.

# श्री खेरमहोदयानां सन्देशः

दिनांकः १०-१२-५५

**आर्य गीर्वाणवाणी-निपुणाः "मधुरवाणी" सम्पादक-महाशयाः,**

प्राप्तं भवदीयं विंशति-नवंबर दिनांकितं पत्रं, मुदितमनसा मया पठितं च सहर्षम् । कथं नु मे सनाम्नोऽपि लोकमान्य तिलक महोदयैः सार्धम् अंशतोऽपि साम्यम्, तुलना-धाष्टर्यम् वा कर्तुं अर्हति अयं सामान्यो जनः । क्व स पुण्यश्लोकः धैर्यमेरुः विद्वज्जनमुकुटमणिः प्रातःस्मरणीयः पुण्यपुरुषः । क्व वा अहं विद्वत्व-कर्तृत्वहीनः मंदभागधेयः कातरः कापुरुषः इति लज्जावनतशिरसा सस्नेहं सप्रमाणं निवेद्यते मया यत्:-

गीर्वाणवाणीमाधुर्यं प्रकटीकर्तुमुद्यता ।
वर्षविंशतिपर्यन्तं स्थितेयं व्रतचारिणी ॥१॥

पत्रिका पुत्रिकारूपा निश्चयं ब्रह्मवादिनी ।
श्रेयः प्रेयश्च लोकानां करोतु शरदःशतम् ॥२॥

पितास्याः पण्ढरीनाथः, असाध्यं तस्य किं भुवि ।
किं पुनर्लिखितव्यं स्यात्? बालोहं मन्दधीः श्रुतः ॥३॥

इति सादरं प्रणम्य विरमे । जयतु च सुरवाणी मधुरवाणी पत्रिका इति शम् ।

**श्री पण्ढरीनाथाचार्य गलगली**
सम्पादकः **मधुरवाणी,**
मधुरवाणी कार्यालयः **गदग**
जिल्हा धारवाड

भवदीयः
**बा. गं. खेरः**



# सुभाषितरसास्वादः

आदिमध्यांतरहितं दशाहीनं पुरातनं ।
अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ ॥१॥

वामाङ्गीकृतवामाङ्गि कुण्डलीकृतकुण्डलि ।
आविरस्तु पुरो वस्तु भूतिभूत्यम्बराम्बरम् ॥२॥

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ॥
भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥३॥

गानाब्धेस्तु परं पारं नोपेयाय सरस्वती ॥
अतो निमज्जनभयात् तुम्बीं वहति वक्षसि ॥४॥

ग्रासाद्गलितसिक्थस्य किं गतं करिणो भवेत् ॥
पिपीलकस्तु तेनैव सकुटुम्बोऽपि जीवति ॥५॥

बन्धनस्थोऽपि मातङ्गः सहस्रभरणक्षमः ॥
अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥६॥

ऊर्णा नैष दधाति नापि विषयो वाहस्य दोहस्य वा
तृप्तिर्नास्य महोदरस्य बहुशो घासैः पलालैरपि ॥
हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते
को गृण्हाति कपर्दकैरमुमिति ग्राम्यैर्गजो हस्यते ॥७॥

सगुणैः सेवितोपान्तः विनतैः प्राप्तदर्शनः ॥
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥८॥

अन्तःकुटिलतां बिभ्रत् शङ्खः स खलु निष्ठुरः ।
हुङ्करोति यदाऽध्मातस्तदैव बहु गण्यते ॥ ॥९॥

राजं स्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः ।
मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥१०॥

प्रायेण धनिनामेव धनलोभो निरन्तरम् ।
पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ॥११॥

रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः ।
तदेव सन्तः सततमुत्सृजन्ति मलं यथा ॥१२॥

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ॥१३॥

दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि 'धनं धनं धनम् ।
इत्थमेव निनदः प्रवर्तते किं पुनर्यदि सचेतनो जनः॥१४॥

Telephone : 37553 Telegram: LANGUAGE




GOVERNMENT OF INDIA
OFFICIAL LANGUAGE COMMISSON

Royal Insurance Building,
12, J. Tata Road, Bombay 1.

# श्री खेरमहोदयानां सन्देशः

दिनांक: १०–१२–५५

आर्य गीर्वाणवाणी-निपुणाः "मधुरवाणी" सम्पादक-महाशयाः,

प्राप्तं भवदीयं विंशति-नवंबर दिनांकितं पत्रं, मुदितमनसा मया पठितं च सहर्षम् । कथं नु मे सनाम्नोऽपि लोकमान्य तिलक महोदयैः सार्धम् अंशतोऽपि साम्यम्, तुलना-धाष्टर्यम् वा कर्तुं अर्हति अयं सामान्यो जनः । क्व स पुण्यश्लोकः धैर्यमेरुः विद्वज्जनमुकुटमणिः प्रातःस्मरणीयः पुण्यपुरुषः । क्व वा अहं विद्वत्व-कर्तृत्वहीनः मंदभागधेयः कातरः कापुरुषः इति लज्जावनतशिरसा सस्नेहं सप्रमाणं निवेद्यते मया यत्:–

गीर्वाणवाणीमाधुर्यं प्रकटीकर्तुमुद्यता ।
वर्षविंशतिपर्यन्तं स्थितेयं व्रतचारिणी ॥१॥

पत्रिका पुत्रिकारूपा निश्चयं ब्रह्मवादिनी ।
श्रेयः प्रेयश्च लोकानां करोतु शरदःशतम् ॥२॥

पितास्याः पण्ढरीनाथः, असाध्यं तस्य किं भुवि ।
किं पुनर्लिखितव्यं स्यात्? बालोहं मन्दधीः श्रुतः ॥३॥

इति सादरं प्रणम्य विरमे । जयतु च सुरवाणी मधुरवाणी पत्रिका इति शम् ।

श्री पण्ढरीनाथाचार्य गलगली
सम्पादकः मधुरवाणी,
मधुरवाणी कार्यालयः गदग
जिल्हा धारवाड




भवदीयः
बा. गं. खेरः

## मित्रपत्रम् (मधुरवाण्याः गताङ्कस्य विमर्शः)

श्रीमत्सु सादरा नैकाः प्रणतयः । मधुरवाण्याः मार्गशीर्ष-सञ्चिका पठिता । गद्य-पद्यालङ्कारैः सुष्ठलंकृतां सुमधुरवाग्देवीं दृष्ट्वा प्रमोद निर्भरः सञ्जातोऽस्मि । मंगलाचरणपद्येषु तु कति मधुरिमा वर्तते तल्लेखन्या लिखितुम् नाहं पारयामि । शब्दालंकारैः, व्याजोक्ति-वक्रोक्ति-व्याजनिंदादि अर्थालंकारैर्मंडितां श्री रामचन्द्रस्तुतिं कंठीकर्तुं समुत्सुकते चेतः । बिरुददानानधिकारिणापि मया 'कविराजः' इति बिरुदं धार्ष्ट्येन श्रीमद्भ्यः अर्प्यते ।

सुभाषितरसास्वादोऽपि सुस्वादुतया पानकाल एव चित्तानन्ददो भवति । 'राक्षसाः कलिमाश्रित्य' एतत्सुभाषितं अधुना पूर्णरूपेण चरतीति भाति ।

मान्य महोदयानां, राष्ट्रपति-राज्यपालानां संस्कृत-विश्वपरिषत्सम्बन्धीनि भाषणानि तु संस्कृतगौरवातिशयेन ओतप्रोतानि । मा. मुन्शीमहोदयानां भाषणं तु पांडित्यप्रचुरं । साहित्याचार्येषु तेषु युक्ततरं सञ्जातं । यथा वाचि तथा क्रियायां यदा परिणतं स्यात् तदैव संस्कृत-परिरक्षण-परिवर्धनेन भारतीयानां सत्वं जीवितं स्यात् । सनातनधर्मगोप्ता देववाणीजनकः स श्रीशः एव गीर्वाणवाग्जीवनदाने प्रभुः। 'तत्रास्मदीयविस्तृतेन कियानिहार्थः' अस्तु ।

श्रीमतां भाषणे वस्तुस्थिति-निदर्शनं सुस्पष्टतयाऽभवदिति प्रशंसार्हाः श्रीमन्तः । उत्स्फूर्तभाषणे 'पक्ष्मनिमिषाणां पक्ष्मता' अनन्तशयनैर्दत्तः कालोऽनन्तः इत्यादि प्रत्युत्पन्नमतित्वं तथा सर्वस्मिन्नपि भाषणे यत्र तत्र भाषा सौष्ठवं, विचारप्रागल्भ्यं स्पष्टवक्तृत्वं च प्रतीयते, तदनुवाच्य चित्तमयूरः सानन्दं नृत्यति ।

श्रीमतां सम्पादकत्वे, सुष्ठु खाद्य-पेय-जल-वाय्वादिभिः परिपुष्टसर्वांगा 'मधुरवाणी' सरसा-सालंकारा-सुपदन्यासा-सुवर्णमयमूर्तिः भूत्वा पुण्यवतां विदुषां चित्ततोषाय भवेदिति निश्चिनुते चेतः ।

अपरं व्यक्तिगतं मनागिव प्रष्टुं समुत्सुकं चेतः । सोलापुरे १९४० चत्वारिंशदधिक एकोनविंशतिशत क्रिस्ताब्दे, धनराज गिरजी रुग्णालये अहं रुग्णशय्यायामासं, तदा श्रीमतां सम्मीलनयोगः समभूदिति स्मरामि । उदर-शस्त्रक्रियार्थं श्रीमतां सुभ्राता खट्वायां आसीदिति स्मर्यते । तदा कानिचित् स्वकृतानि पद्यान्यपि श्रीमद्भिः श्रावितानि,

३९ पृष्ठे अग्रे द्रष्टव्यम्

# संस्कृतं सामाजिकव्यवस्था च

## बुद्धोऽपि दुष्पद्धतिमेव भेजे

मूललेखकः— स्वामी विवेकानन्दः

संस्कृतज्ञानभांडागारस्य उद्घाटनकुञ्चिका प्रत्येकस्यापि भारतनागरिकस्य हस्ते भवेत् । गिरिगह्वरेषु गूढं तपोवनेषु गहनारण्याश्रमेषु गुप्तं निलीनं च तं ज्ञाननिधिं सर्वेषामपि सौभाग्यं विधातुं महानेव प्रयत्नः कर्तव्यः । एकस्मिन्नेव शब्दे वक्तव्यं चेत् संस्कृतं सर्वस्वामिकं भवतु । न तत्र कस्याश्चिदपि एकस्या जातेः विशिष्टवर्गस्य वा एकाधिकारो वा मास्तु इत्येव मम मनीषा ।



विचाराः मातृभाषास्वेव बोधनीयाः । परं ते नैव सह संस्कृतस्यापि शिक्षणं अनिवार्यंतया सर्वेषामपि प्रदेयमेव । यतो हि संस्कृतशब्दानां नादमाधुरी स्वरवैखरी एव हि जनाङ्गस्य कामप्यपूर्वामेव अभिनवां स्फूर्तिं स्थैर्यं उत्साहं च प्रददाति ।

श्री रामानुज, चैतन्यप्रभु, कबीरदासप्रभृतिभिः दीनोद्धाराय महानेव प्रयत्नः कृतः स्वस्वजीवनकाले । एतैः सत्पुरुषैः नीचवर्णानां अज्ञवर्गाणां निकृष्टजातीनामपि जनानां जघन्यजीवनानि उपदेशामृतेन प्लावितानि पावनानि परिष्कृतानि

संस्कारसम्पन्नानि च कृतानि । परं तु तेषां पश्चात् शतावधिकेषु एव वर्षेषु तैः प्रचालिताः विचारधाराः तत्वप्रणालिकाः आचार-परम्पराश्च प्रतिबद्धा एव । किं तत्र कारणम् ?

**अत्रोच्यते**

यद्यपि एतैः आचार्यपुरुषैः पतितोद्धरणार्थं, पामरोत्थाप-नार्थं, सामान्यजनतायाः सांस्कृतिकसमुत्कर्षार्थं च मनःपूर्वकमेव सर्वात्मना प्रयतितमेव । परं तेषां सर्वेऽपि प्रयत्नाः व्यर्था एव संजाताः । कुत इति चेत् ते स्वस्व शक्तिसर्वस्वं उत्साहोद्रेकं च एकीकृत्य केंद्रीकृत्य च संस्कृतप्रसाराय प्रयत्नान् न अकुर्वन् । संस्कृतस्य सार्वत्रिकप्रसारणं विना विहिताः सर्वेऽपि समाजो-द्धारप्रयत्नाः निष्फला एव भवेयुः इत्येतद् शतवारं दृष्टचरमेव ।

**बुद्धस्य महान् प्रमादः**

भगवता गौतमबुद्धेनापि इतोऽप्यधिक एव महान् अप-राधः कृतः यद् असौ स्वजीवनकाले एव संस्कृताभ्यासं निषेध-यित्वा पालीप्रचाराय प्रोत्साहनं दत्तवान् । संस्कृतस्य सार्वजनिक-रूपेण सामूहिकस्वरूपेण च अनिवार्यतया सर्वैरपि अत्यावश्यकं अध्ययनं बुद्धकालपर्यन्तं क्रियते स्म । एतादृश्याः सार्वलौकिक-संस्कृताध्ययनपरम्परायाः प्रथमप्रतिबन्धकः आद्यविच्छेदकश्च बुद्ध एव । सः स्वमतस्य तीव्रप्रसाराय आशुप्रचारणाय च लोकभाषायां पाल्यामेव सर्वाणि अपि स्वमततत्वानि उपादिशत् तेन तस्य मतं अत्यल्पीयस्येव काले सार्वत्रिकीं प्रसिद्धिं अलभत । सर्वसामान्यजनेषु अपि बौद्धतत्वानां ज्ञानोदयः संजातः । परं तु तेन मतज्ञानेन सह जनानां नीतिमत्ता वा नागरिकता वा रीति-सम्प्रदाया वा न परिष्कृता नापि संस्कृता वा समपद्यन्त । संस्कृतनाशात् तेषां संस्कृतिरेव समाप्ता अभवत् ।

सामाजिकाधःपातं निरोद्धुं सर्वोत्कृष्टा संस्कृतिः एव प्रभवति नतु अन्यविधो ज्ञानराशिः। अद्य केवल ज्ञानविज्ञानराशिं भूयसा संवर्धितवन्तः संवर्धयन्तश्च बहव एव देशाः विद्यन्ते। न तत्र संस्कृतं नवा संस्कृतिः। संस्कृतिविहीनं केवल ज्ञानं सिंहशार्दूलादिहिंस्रपशुवत् लोकानां बाधकमेव भवति नतु सुखसाधकम्। तत्तन्मातृभाषाद्वारा दत्तं दीयमानं ज्ञानं जनानां चर्मचुम्बि (Skin:deep) एव, नतु मर्मालम्बि, नापि हृदयग्राहि वा भवति। किञ्चिदिव नखोल्लेखेनापि तद् ज्ञानावरणं प्रस्फुटति। अन्तःसुप्तं गुप्तं च पशुत्वं पिशाचत्वं वा पुनः उन्नमयत्येव स्वं शीर्षम्।

अतः सर्वेषामपि जनानां बहिरङ्गज्ञानाधानापेक्षया हृद्-गुहान्तरङ्गे साधुसंस्कृतिप्रतिष्ठापनार्थमेव महान् प्रयत्नः आस्थेयः। सा च संस्कृतिः संस्कृताधीना एव। अतः संस्कृति-रक्षणाय संस्कृतस्य सार्वत्रिकं अध्ययनं अत्यावश्यकं अपरिहार्यं च।

सर्वेषामपि मातृभाषाध्ययनं अत्यावश्यकमेव। तेनैव सद सांस्कृतिकज्ञानमप्यावश्यकतामेव समश्नुते। एवं प्रदत्ते सांस्कृतिक-ज्ञाने, विचारविकासे च समतोलनं भवेत्। तत्तन्मातृभाषायामेव सर्वमपि शिक्षणं यदि दीयेत सायान्य सर्वजनेभ्यः तदा अधीत-संस्कृताः केचन जनाः एव ज्ञानभाण्डारं सर्वमपि स्वशिरः कपालकपाटे निक्षिप्य अच्छिद्रमुन्मुद्र्य इतरान् वञ्चयन्ति। ज्ञानफलं स्वयमेव भुञ्जन्ति। केवलमातृभाषामात्रज्ञानिनः सर्व-ज्ञानभांडाराणां कपाटोद्घाटनकुञ्चिकामेव संस्कृतरूपेण वशी-कृतवद्भ्यः विद्वद्भ्यः अतीव निकृष्टा अल्पज्ञा एव भवन्ति। एवं केवलमातृभाषाशिक्षणेन देशे अज्ञानां सुज्ञानां च द्वौ वर्गौ एव निर्मितौ भवेयुः। तयोश्च निरन्तरं घर्षणं अन्ततः उभय-

# विधर्मीयाणामपि गङ्गाव्यामोहः

"सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु"

गङ्गाजलस्य रूपं सुधासौंदर्यं, रसस्तु सुधातोऽपि रुचिकरः मधुनोऽपि मधुरतरः । न केवलं शुचि-रुचि-रसरस्यं च जान्हवी-जलं किन्तु पथ्यं पुष्टिकरं तुष्टिप्रदं च । अनादिकालतः हिंदवः गङ्गायाः पूजां प्रशंसां वा यत्कुर्वन्ति तत्र केवलं अन्धविश्वासो वा मूढभावना वा 'तातस्य कूपोऽयम्' इत्यादि मुग्धश्रद्धा वा न कारणम् । किन्तु–

"अहो निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं मधुरपरिणामो रसमयः ॥"

प्राचीनकाले आर्याः चिकित्सकदृष्ट्या गङ्गाजलस्य कणकणान् तद्गतगुणगणान् विविच्य विश्लिष्य पृथक्कृत्य परीक्ष्य आस्वाद्य अनुभूयैव च सा सर्वश्रेष्ठा, जलप्रपञ्चे एव सर्वात्मना साधिष्ठा, रुचितः स्वाधिष्ठा. रूपतो वरिष्ठा, रसतो गरिष्ठा, महिम्ना

---

विनाशायैव भविष्यति । अतः ईदृशवैषम्यनिरासार्थं सर्वेभ्यः समानरूपेण संस्कृतशिक्षणमेव आवश्यकमिति प्रदेयमेव । तत्रापि नीचजातिभ्यः परागतजनाङ्गेभ्यश्च अवश्यं प्रथमं सुरभाषा-शिक्षणं देयम् । अन्यथा संस्कृतज्ञानस्य लाभेन पुरोगतः समाजः तेषामुपरि स्वाधिकारं प्रचालयेत् । अतः "The only safty to men who belong to lower castes, the only way to Raise your condition is to study sanskrit" निकृष्ट-जातीयानामुद्धारे एक एव मार्गो नाम संस्कृताध्ययनमेव । कलहेन वा द्वेषेण वा त्वेषेण वा यूयं नोच्चवर्णीयानां समाः भवितुमर्हथ । भवतां महतां साम्यं पारम्यं महत्वं गौरवं संस्कृतिः ज्ञानं च यद्यपेक्षितं तदा संस्कृतं समधीयताम् ।

महिष्ठा च इति निर्धार्य एव विचारपूर्वकमेव तत्र भक्तिं कृतवन्तः। इतरजलेषु अदृश्यमानाः विलक्षणा एव शक्तिवर्धकत्व-पुष्टिदायकत्वादयः आरोग्यगुणाः सहस्राधिकवर्षेभ्यः पूर्वमेव गङ्गायां दृष्टाः प्राचीनैः चिकित्सातन्त्रविशारदैः।

"हिमवत्प्रभवाः पथ्याः पुण्याः देवर्षिसेविताः"

इत्यादिवचनैः चरकाचार्यः हिमवत्प्रभवानां गङ्गाम्भसां प्रथमतः पथ्यत्वं, ततः तस्मादेव च पुण्यकरत्वं, तत एव च 'देवर्षिसेवितत्वं' च उद्घोषयति। तेषां गङ्गाजलानां देवर्षिसेवितत्वे रत्न-सुवर्ण-रजत-ताम्र-लोहादिधातुभूयिष्ठहिमप्रदेशाद् उद्भूतत्वं, मुख्यं कारणम्। हिमालयस्य मणिमयप्रदेशेषु प्रवहत्सु जान्हवीजलेषु तत्रत्यानि भूयांस्येव पाचक-पोषक-क्रिमिनाशक-शक्तिदायक-सत्वसपन्नानि द्रव्याणि एव वर्तन्ते। अत एव तेषां पथ्यत्वं पथ्यत्वादेव पुण्यत्वं च।

एतादृश एव अभिप्रायः वाग्भटेनापि 'अष्टाङ्गहृदय' नाम्नि ग्रन्थे 'हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः' इत्यादिपद्येषु आविष्कृतः। "यथोक्तलक्षणहिमालयभवत्वादेव गाङ्गं जलं पथ्यं" इति चक्रपाणिदत्तः एतेषा पद्यानां भावमपि साधु विवृणोति। पुण्यपट्टणस्थ भाण्डारकर इन्स्टिस्ट्यूट संस्थायां 'भोजनकुतूहलम्' नामकः एकः ग्रन्थः अस्ति। तत्र "स्वादु श्वेतं स्वच्छमत्यन्तरुच्यं पथ्यं पावयं पाचकं पापहारि" इति गङ्गा-नीराणां सर्वेऽपि गुणाः संग्रहेण निरूयिताः। एवं गुणविशिष्टत्वादेव 'तीर्थराजेति' महागौरवं प्रदत्तं भागीरथ्याः।

तस्याः ईदृशान् असदृशान् गुणान् दृष्ट्वा एव प्राचीनाः राजमहाराजाः अपि स्वराज्यानि परित्यज्य गङ्गातटाके वासं कुर्वन्ति स्म।

" अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा । विलोलद्वानीरं तव जननि तीरं श्रितवताम् । सुधातः स्वादीयः सलिलमिदमातृप्तिपिबतां । जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ "

अस्त्वेषा भारतीयानां कथा । ये भारतीयानां आचार–विचारान् निन्दन्ति, हिंदूनां पवित्रपदार्थान् सर्वानपि ध्वंसयितुं तिरस्कर्तुं निराकर्तुं उपहसितुं च बद्धकङ्कणाः, भारतीयदेव-धर्म-तीर्थादीनां गुणानपि दोषतया निर्दिश्य निन्दितुं, तेन आनन्दितुं येषां जिव्हा सर्वदापि फुर्पुरायते तादृशाः हिन्दुद्वेषिणः आर्य-द्रोहिणः भूयांस एव यवना अपि गङ्गास्नानस्य गङ्गापानस्य च यावज्जन्म व्रतमेव अकुर्वन्नित्यहो महामहिमा देवनद्याः । न चेय-मतिशयोक्तिः किंतु 'कागदपत्र' इतिहासादिप्रमाणसिद्धा पुरा-वृत्तपरिषदनुमता सत्यकथा एव ।

चिरादेव इतिहासकर्तृणां उपहासपात्रायमाणः दुरंतविक्रमः विक्षिप्तप्रकृतिः यवनराजो नाम 'महमदतघलकः' । अत्याधुनिक-संशोधका महमदतघलकोऽपि राजकारणे अत्यन्तं पटीयान् चतुरमतिः शासनतन्त्रदक्षः अर्थशास्त्रज्ञः आसीदिति गवेषणां कृत्वा संस्थापयन्ति । तस्मिन् दुर्गुणा इव सद्गुणा अपि भूयांस आसन्निति सप्रमाणं उदाहरन्ति । तस्य सद्गुणेषु गङ्गाजलपानस्य व्यसनमपि एकम् आसीत् । सः दौलताबादे वर्तमानोऽपि प्रति-दिनं काशीतः गङ्गाजलं आनाययति स्म । तदर्थं च सः बहुतरं द्रव्यस्य व्ययमपि करोति स्म । तेषु दिनेषु काशीतः दौलतबादं प्रति एकं गङ्गाम्भसा सम्भृतं पूर्णकुम्भं आनाययितुं ४० दिनानि लगन्ति स्म । एतादृशं महाप्रयासं कृत्वा सः 'स्वयंव्यक्तः' 'देवानां प्रियः' महाराजः सुरनदीसलिलपानव्रतं यावज्जन्म अन्वतिष्ठत् ।

लोकप्रिय यवनराजस्य अकबरस्य अपि महानेव गङ्गा-व्यामोहः। अबुलफजल नामकः तस्य विद्वन्मित्रं 'आयिने अकबरी' नाम्नि ग्रन्थे एतद्विषये एवं विलिखति "महाराजाय बादशहाय अमृतापेक्षयाऽपि जन्हवीजलमेव अत्यधिकं रोचते। प्रतिदिनं नियमितरूपेण भागीरथीजलेन एव सः स्नानं पानं च करोति। अप्रमादेन गङ्गासलिलमानेतुं भूयांस एव जनाः तेन नियोजिताः। काशीत आरभ्य दिल्लीपर्यन्तं तत्र तत्र राजाज्ञया नियोजिताः एते वारिवाहकाः सुवर्णकलशेषु सुधासुन्दरं मकरन्द-मधुरं च मन्दाकिनीनीरम् आपूर्य उन्मुद्र्य राजांतिकं प्रेषयंति। राजधान्यां वास्तु प्रवासे वास्तु युद्धसम्भ्रमे वास्तु। अकबरः कुत्रत्योऽपि गंगाजलादितरजलस्य उपयोगमेव नैव करोति। प्रसंगवशात् देशान्तरे यदि पर्याप्तं गंगाजलं नैव लभ्येत तदा पाकार्थं यमुनादिनदीनीराणि उपयोक्तुं सम्मतिं यच्छति। परं तत्रापि गंगाजलस्य कतिपयबिंदूनां वा पाकार्थमानीतेतरजलेषु संमिश्रणमपि वा अवश्यकर्तव्यमेव। पानार्थं च प्राणैः कण्ठगतै-रपि इतरजलानां बिन्दुमात्रमपि आचमनमपि नैव करोति सः। एवम् अतिभूमिगतो वर्तते बादशाहस्य गंगाप्रेमा।"

यवनराजेषु औरंगजेबो नाम--

"हिन्दूनां प्राणहिंसार्थं मूर्तीनां भञ्जनाय च।
धर्मविध्वंसनार्थाय सम्भवामि युगे युगे॥"

इति घोरप्रतिज्ञां कृत्वा एव भूमिं अवतीर्णः साक्षात् कलिरेव। परं तस्य गंगामोहः यावत्तीव्रतर आसीत्। ईसवीय १६५९-१६६७ पर्यन्ते काले भारतदेशे कृतसंचारः 'बार्नियर' नामकः एकः प्रवासी औरंगजेबस्य गंगाव्रतं कीदृशमासीदिति विलिखति। "दण्डयात्रार्थं सर्वदापि प्रयाणव्यसनी औरंगजेबः प्रस्थानसमये

खाद्यपेयपदार्थैः सह गंगाजलस्य पर्याप्तः संग्रहः वर्तते वा नवा इत्येतद् स्वयं निरीक्ष्य तद्व्यवस्थां करोति स्म । तस्य राजास्थानस्य सर्वेऽपि सदस्याः प्रायः गंगोदकमेव उपयुञ्जन्ति । प्रयाणे गंगोदकनयनाय उष्ट्राणां बहूनामेव उपयोगः क्रियते । औरंगजेबस्य प्रातःकालीनः उपहारः गंगोदकम् एव । गंगाजलं तस्य प्राणेभ्योऽपि प्रियकरम् " इति ।

बहव एव भारतीया 'नवाबाः' स्नान-पान-पाकाद्यार्थे गंगाजलस्यैवोपयोगं कुर्वन्तीति अन्यः फ्रेंचप्रवासी ट्रव्हर्नियर नामा स्वप्रयाणवृत्तांते विलिखति । एड्वर्डमूर नामा पाश्चात्यसेनापतिः लिखति "यद् दाक्षिणात्येषु यवनेषु विवाहादिसमारंभेषु उपस्थितेभ्यः अतिथिभ्यः गंगाजलमेव अमूल्यं गौरवास्पदं पानीयमिति प्रदीयते । तदर्थं च यजमानस्य महानेव व्ययः अतिथिप्रीत्यर्थं कर्तव्यः भवति" इति । पेशवेप्रभृतिभिः हिन्दूराजाधिराजैः सर्वाधिकारिभिश्च गंगाजलं काशीतः प्रतिदिनमानीयते स्म इत्येतत्तु नैतदाश्चर्यम् ।

## पुत्रादिच्छेत् पराजयम्

"जक्कण त्वम् अद्य तातः संजातः ।"

"किं पुत्रः अथवा पुत्री ?"

"पुत्ररत्नम् !"

"फलितं गुरुजनाशीर्वादैः । पञ्चाङ्गमानीयताम् । पुत्रस्य जातकं तावत्पश्यामि ।"

इति वदन् सुप्रसिद्धः शिल्पकारः जक्कणाचार्यः सद्योजातस्य स्वशिशोः ग्रहगतिं सुसूक्ष्मं निरीक्षते स्म । शिल्पकलायामिव ज्योतिर्विद्यायामपि सः कुशलः आसीत् । अत एव सः स्वपुत्रस्य जननक्षत्रराशिग्रहचारादीन् ज्योतिर्गणितदृष्ट्या विविच्य

शुभाशुभानि परीक्षितुं प्रारभत । परं तु परीक्षण एव ससंभ्रमं आक्रुश्यत् "हा हन्त हन्त हतोऽस्मि मंदभाग्यः । किं नायं मदीयः पुत्रः ! किमेतस्मिन् लग्ने समुत्पन्नः व्यभिचारजातः । धिङ्मे दांपत्यजीवनं, धिगिमां भार्यां, धिक् पुत्रं, धिङ्मां, किं मम ग्रहे एव व्यभिचारः ! किं वेश्यया सह संसारः कार्यः धिङ्मम जीवितं' इति वदन्नेव शिशोः जननलग्नकुण्डलं विपाट्य गृहं त्यक्त्वा देशांतरं गतः जक्कणाचार्यः ।

कलियुगस्य विश्वकर्मा सः जक्कणः दुःखातिरेकेण जीवने एवं जुगुप्सितः अभवत् । परं शेषं च आयुः 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति वचनानुसारेण यापयितुम् ऐच्छत् । देवदत्तां च शिल्पविद्यां देवालयनिर्माणार्थमेव उपयोक्तुं निश्चिकाय । 'मम स्वकर्म नाम दिव्यदेवालय-देवप्रतिमानिर्माणमेव' । अनेन च नैकदेवदेवालयनिर्माणरूपेण स्वकर्मणा अभ्यर्चितः 'तुष्टिं विन्दत ईश्वरः" इति संकल्प्य महामहादेवतायतनानां निर्माणकर्मणि मनः केंद्रीकृतं अकरोत् । तेन तस्य मनः प्रसन्नं निर्दुःखं तृप्तं शांतं च समभवत् । अस्य शिल्पकला सार्वभौमत्वमेव प्राप्तं । अचिरादेव च तस्य शिल्पकलाकौशल्यस्य कीर्तिः दशदिक्षु प्रसृता । देशविदेशेभ्यः राजमहाराजाः तं आकारयामासुः । दिव्यानि भव्यानि च देवमन्दिराणि तेन कारयामासुः । राष्ट्रस्य कोणे कोणे जक्कणनिर्मिताः परःसहस्रा एव देवालयाः सर्वत्र विराजन्ते स्म । देवालयेषु निक्षिप्तः प्रत्येकोऽपि शिलाशकलः, पाषाणखण्डः, स्तम्भालम्बः, पीठपर्यङ्कः भित्तिकर्तनं, मूर्तिचित्रणं, गोलाविर्भावनं, शिखरोत्तोलनं, चित्रलेखनं च जक्कणस्य शिल्पकलायां अद्वितीयं प्रावीण्यं असाधारणं च चातुर्यं कथयन्ति स्म । तानि च भव्यभवनानि दृष्ट्वा लक्षाधिका एव जनाः 'अहो पांडित्यं' इति

आश्चर्योद्गारानेव आविष्कुर्वन्ति स्म ।

तस्य कीर्तिं श्रुत्वा बहव एव राजराजेश्वराः गौरवपूर्वकं जक्कणम् आहूय सत्कारं चक्रुः । तथाविधदेवालयसदृशानि राजभवनानि निर्मातुं प्रार्थयन्त । तदर्थं च यावदपेक्ष्यते तावद्द्रव्यं यच्छाम इति अकथयन् । परं जक्कणः विनयपूर्वकं स्पष्टं आह– "नाहं द्रव्यलोभी । देवालयादन्यद् एकनीडमपि निर्मातुं नाहम् उत्सहे । नाहं धनानां लक्षं लक्षीकरोमि । कोटिरपि मम गणनाकोटिं न जातुचिद् आटीकते । केवलं सेवाबुद्धया देवालयानां देवमूर्तीणां चैव निर्माणं करिष्यामि । नतु राजभवनानां राज्ञीसदनानां अन्तःपुराणां विहारमन्दिराणां केलीकुञ्जानां वा राजमहाराजमूर्तीणां प्रमदाप्रतीकाणां वा निर्माणं करिष्ये ।

तेन तस्य यशः सर्वत्रापि अत्यधिकं अभिवृद्धं अभवत् । कर्णाटकराजवंशेषु अतीव सुप्रसिद्धे होय्सळवंशे समुत्पन्नः पंडितपक्षपाती रसिकशेखरः कलाभिज्ञः श्रीमान् विष्णुवर्धनः जक्कणस्य शिल्पाचार्यतां जानन् अत्यादरेण तं स्वपट्टणं आव्हयामास । अतीव विनयेन राजगौरवेण च सत्कृत्य सानुनयं प्रार्थयत ।

"शिल्पाचार्य ! मम एका आकाङ्क्षा वर्तते । यद् मम राज्यस्य अतिमुख्यतमेषु चतुर्विंशतिपट्टणेषु श्रीविष्णोः केशव-नारायण-माधव-गोविन्दादिचतुर्विंशतिमूर्तयः प्रतिष्ठापनीयाः । तत्र तत्र तदर्थं च भव्यदेवालयानामपि दिव्यनिर्माणं कारयितव्यम् " इति । तदर्थं च सांप्रतं भवान् आधुनिकविश्वकर्मा आहूतः। भवतश्च अमृतहस्तेन केशवादिमूर्तयः निर्मापयितव्या इति संकल्पं कृतवानस्मि । तदर्थं कियदपि वा धनं तुभ्यं दातुं सिद्धोस्मि । कथय कियतीः कोटीः अपेक्षसे ।

जक्कणः राजन् नाहं एकां पैकां काकिणीं वा भवतः

अपेक्षे । श्रीविष्णुप्रेरणया विष्णुप्रीत्यर्थं संतोषेण देव-देवालयानां निर्माणं करोमि । प्रथमतः केशवमूर्ति कुत्र वा करवाणि ? आज्ञप्यताम् ।

राजा– अत्रैव राजधान्यां बेलूरनगरे ।

जक्कणः– यदाज्ञापयति महाराजः ।

* * * * *

श्री केशवदेवस्थानस्य निर्माणकार्यं रभसात्प्रवर्तितम् । शताधिका एव कुशलशिल्पिनः जक्कणस्य चतुर-दक्षनेतृत्वे अचिरादेव देवालयनिर्माणकर्म समापयत् । स्वयं जक्कणः मसृणतमायां अमृतशिलायां श्री केशवस्य प्रतिमां महता कौशलेन उट्टङ्कितवानासीत् । श्व एव देवप्रतिष्ठापनमहोत्सवः भविता देशविदेशेभ्यः असंख्या एव जनाः तं महासमारम्भं साक्षात् दृष्टुं आगता आसन् । आगताः सर्वेऽपि तदैव सिद्धं भव्यं देवालयं दिव्यां च मूर्तिं दर्शं दर्शं आनन्दन्ति स्म । अभिनन्दन्ति स्म च जक्कणं विष्णुवर्धनं च ।

तत्र एवं संमिलिते महाजनसंमर्दे 'कैदाळ'ग्रामादागताः केचन बालका आसन् । तेषु अन्यतमः बालकः विशालं देवालयं तत्र भित्तिफलकेषु स्तम्भेषु गोपुराग्रे च प्रत्युप्तानां विविधमूर्तीणां आकारप्रकारान्, भावभङ्गीः, प्रमाणपरिमाणादींश्च दर्शं दर्शं स्पर्शं स्पर्शं च सुसूक्ष्मं परीक्षते स्म । दृष्ट्वा तस्य वयस्याः उपहासेन "अयं कोऽपि जक्कणशिशुः आलक्ष्यते । विष्णुवर्धनेन जक्कणशिल्पस्योपरि पर्यवेक्षणा नियोजित इव (Inspection) निरीक्षणं प्रारब्धवान् इति । परं तस्य बालकस्य इतो ध्यानं गमनं वा नैवासीत् । सः समग्रदेवालयस्य परिशीलनं परिसमाप्य गर्भागारे परेद्युः प्रतिष्ठापनार्थं एकस्मिन् कोणे संस्थापितां केशव-

मूर्तिपरीक्षितुमुपचक्रमे। तस्याः प्रतिमायाः समुज्वलां मुखकांतिं लोचनयोः चाकचक्यं, आकारसौंदर्यं, भावरम्यतां, च दृष्ट्वा क्षणं मुग्ध इव अभवत् सः बालः। ततः तस्याः मूर्तेः अङ्गप्रत्यङ्गं हस्ताग्रेण संस्पृशन् परिशीलयांचक्रे। तदा मध्ये अकस्मादेव सः क्षणं ध्यानमग्न इव क्षणमुद्विग्नः इव क्षणं सन्देहचक्रांदोलित इव पुनःपुनः परीक्षयामास। ततः कतिपयनिमिषानन्तरं शांत-गम्भीरया मुखमुद्रया सधैर्यं आघोषयत् कठिणध्वनिना यत्— "प्रतिमेयं न शुद्धशिलामयीति" तदा तत्रत्याः जनाः 'अहो! कस्त्वं जक्कणस्य तातः आगतः। किं तावदपि स शिल्पचार्यः न जानाति? अशुद्धशिलायां मूर्तिं रेखयितुं जक्कणः त्वत्तोऽपि मन्दतरः?

तदा बालकः स्निग्धगम्भीरया गिरा अगादीत् "यदीयं मूर्तिः भज्येत तर्हि मम वचनस्य सत्यता प्रतीयेत।"

"अहो मूर्तिभञ्जकमहमदगछनीतः किमुपदेशं अगृण्हाः? स्फोटनानन्तरं सा शिला यदि शुद्धा स्यात्?"

"मम शिरस्फोटनं विधीयताम्।"

"अये ब्रह्महत्यायै कः उद्युञ्जीत! तव शिरस्फोटनं मास्तु प्रतिमास्फोटनमपि मास्तु। मूर्तिं अभञ्जयित्वा एव तस्याः शिलायाः अशुद्धता स्थापयितुं यदि शक्यते साधय तावत्" इति जना अवदन्।

तदा निरुत्तरः स बालः वयस्यनां परिहासोक्तिभिः तोद्यमानः गृहं गतः। पूर्णां रात्रिं स चिन्तामग्नः एवासीत्।

परेद्युः प्रातःकाले एव मङ्गळवाद्यानि अश्रूयन्त। अरुणोदयकाल एव देवालये लक्षशो जनाः केशवमूर्तेः प्रतिष्ठापनमहोत्सवं दृष्टुं संमिलिता आसन्। ब्राह्मणाः उच्चकण्ठेण वेदघोषान् कुर्वन्ति स्म। देवालयस्य प्रांगणे शताधिका एव सामन्तराजाः

सहस्राधिका एव पण्डितमार्तण्डाः, लक्षाधिका एव प्रेक्षकाः स्व-स्वस्थानेषु विराजन्ते। सर्वेऽपि महाराजस्य मार्गं, ईदृशभव्य-भवननिर्मातुः शिल्पिसार्वभौमस्य जक्कणस्य च मार्गं प्रतीक्षंते स्म।

मागधाः महाराजस्य आगमनं बिरुदावलिप्रशंसाभिः उद-घोषयन्। सर्वेऽपि स्वस्वस्थानेषु एव अंजलिं बध्वा उत्थिताः। महा-राजः जक्कणं हस्ते गौरवपूर्वकं गृहीत्वा एव सभारङ्गं प्राविशत् तदर्थं एव निर्मापिते स्वर्णासने स्वयं जक्कणाचार्यं सन्निवेश-यामास। स्वयं च सिंहासनं आरूढवान्।

पुरोहिताः प्रतिष्ठापनमन्त्रान् उच्चारयितुं प्रारभन्त। वेद-घोषैः जक्कणस्य प्रशंसाक्षरैश्च समग्रमेव सभांगणं मुखरीकृतं आसीत्। जक्कणश्च प्रीतिस्निग्धया अभिमानपूर्णया दृष्ट्या क्षणं स्वकृतिकलशायमानां मुग्धां मधुरां च मसृणतमां केशवमूर्तिं, क्षणं आत्मानमेव नेत्रशतैकलक्ष्यं कलयन्तं प्रचण्डं जनस्तोमं च धन्यंमन्यताबुद्ध्या कृतकृत्यताभावेन च सस्पृहं आलोकयति स्म।

अत्रांतरे सहसैव अश्रूयत कोऽपि चीत्कारः।

"स्थीयताम्! अवरुध्यतां प्रतिबध्यतां च अयं समारंभः"

स्तब्धाः पुरोहिताः। मूकीभूतानि मङ्गलवाद्यानि। प्रति-बद्धः मन्त्रध्वनिः। सर्वेऽपि जनाः द्वारोपांते दृष्टिक्षेपं अकुर्वन्।

स एव पूर्वदिने आगतः बालः आह– "इयं मूर्तिः अशुद्ध शिलया निर्मिता"।

"असत्यमिदम्। परमशुद्धे एव शिलाखण्डे प्रतिमां प्रति-रूपितवानस्मि" इति जक्कणः क्रोधांधः अवदत्।

"यदि इयं शिला शुद्धा न स्यात्..... साक्षेपमपृच्छत् धीरध्वनिना स बालः।

"मम दक्षिणहस्तमेव छेत्स्यामि" उदतीतरत् कोपाटोपात् प्रस्फुरत्सर्वांगः जक्कणः।"

"मूर्तेः नाभिकमलपरिसरे अशुद्धिः स्पष्टं प्रतीतिगोचरा भवति । परीक्ष्यताम् ।"

"किं प्रमाणं! कथं वा को वा परीक्षाक्रमः ?"

"मूर्तेः सर्वांगे गन्धलेपनं क्रियताम् । नाभीपुटादन्यत्रैव सर्वावयवेषु लिप्तः गन्धः स्वयं शुष्यति । परं नाभिपरिसरे तु आर्द्रता चिरस्थायिनी भवति । तदेव मम विधानस्य सत्यत्वे प्रमाणं" इति अवादीद् अत्यधिकतरेण आत्मविश्वासेन बालः ।

पुरत एव स्थिताः पुरोहिताः प्रतिमायाः सर्वांगमुपलेपयामासुः दिव्यगन्धेन । तत्सर्वं पंचषनिमिषावधौ एव शोषितम् अभूत् । परं बालकस्य वचनानुसारेण नाभीप्रदेशस्तु आर्द्र एव अतिष्ठत् । न किंचिदपि शुष्कं । परं जक्कणस्य मुखं तु शुष्कं नेत्रं च आर्द्रं अलक्ष्यत ।

तदा राजा आगत्य बालकस्य वचने जातविश्वासः मूर्ति स्फोटयितुं आदिशत् । भंजितायां प्रतिमायां स्फुटिते च नाभीपुटे तत्र किंचित् जलं एकः भेकश्च आस्ताम् ।

तद् दृष्ट्वा बालः साधिक्षेपं अघोषयत् 'दृश्यताम् । शुद्धे पाषाणे कथं वा जलं वा जन्तुर्वा जीवेद् अवशिष्येद्वा ?

राजा बालमालिंग्य अपृच्छत् "कोऽसि त्वम् ? कस्य वा त्वम् ?" इति ।

"अहं एतद्देवालयनिर्मातुः जक्कणाचार्यस्य पुत्रः डङ्कणाचार्यः ।"

"असत्यमिदं । न मे पुत्रः आसीदस्ति वा" इति अवदत् तत्रैव स्थितः जक्कणः ।

भालकः– तवैव अहं पुत्रः ।

जक्कणः– नहि नहि ।

बालकः– वस्तुस्थितिं अस्यां महासभायां वक्तुं लज्जते मे मनः। अतः बहिरङ्गसाधनैरेव आवयोः सम्बन्धं निर्णयतु महाराजः। अस्माकं वंशपरम्परागतविद्यायां शिल्पकलायां तवेव ममापि विद्यमानं अशिक्षितपटुत्वं मुख्यं गमकं तव पितृत्वे मम पुत्रत्वे च। आवयोश्च मुखचर्यामपि सुसूक्ष्मं निरीक्षन्तां परीक्षन्तां निश्चिन्वतां च पारिषदाः इति वदन् जनाभिमुखमवस्थितः डङ्कणः।

राजा– किं कारणं त्वत्परित्यागस्य ?

डङ्कणः– तदेव कथयितुं संकुचति मम चेतः। परमद्य मम मातुः मानरक्षणार्थमधुना निगदिष्यामि। "अयं च अस्मत्पिता मम जननकाले जन्मकुण्डलीं परीक्ष्य 'अयं शिशुः व्यभिचारजात इति ज्योतिर्विद्यायामपरिपूर्णेन अपक्वेन च अल्पज्ञानेन निर्णीय गृहत्यागं कृत्वा देशभ्रष्टः बभूव। अहं च प्रवृद्धः प्रबुद्धः भूत्वा ज्योतिष्ये परिश्रम्य अध्ययनं कृत्वा पितुः कुण्डलीनिरीक्षणे दोषं ज्ञातवान्। अत्र गणनायां स्खालित्येन सूक्ष्मज्ञानराहित्येन च समग्रजननराशिकुण्डलमेव अन्यथा विपरीतं च वाचयित्वा, अर्थमनर्थं कृत्वा, मम मातरं जारिणीं ज्ञात्वा, पलायितोऽसौ पितृपदलांछनः दण्डनीयः। एतद्वृत्तेन च मिथ्यारोपेण जातहृद्रोगा मम माता चिरं चिंताक्रांता मृता बभूव। अद्यापि नासौ पुत्रमिति मामङ्गीकरोति। इयं मे जन्मकुण्डली। परीक्ष्यतां सामुद्रिकैः"

तदा सा जन्मकुंडली सामुद्रिकैः जक्कणेन च आलोकिता। तदा ज्ञातस्वदोषेण जक्कणेन सरभसमालिंगितः पुत्रः क्षमापितश्च। ततः सः स्वप्रतिज्ञानुसारं स्वदक्षिणबाहुमुच्छेत्तुं खड्गं कोशादाकर्षत्। तदा राजा आगत्य जक्कणस्य हस्तात् खड्गं आच्छिद्य स्वहस्ते गृहीत्वा अवदत् ।

राजा– जक्कण ! कोयं कुतो वायं आत्महत्योद्योगः ?

जक्कणः– स्वप्रतिज्ञारक्षणाय ।

ईदृशी आत्मघातकप्रतिज्ञा नैव पूरणीया इति बहुविधं जक्कणः प्रार्थितोऽपि स्वबाहुच्छेदनात् विरन्तुं नैच्छत् । तदा राजा दीनया वाण्या याचयामास–

" शिल्पब्रह्मन् ममैका चरमाकांक्षा भवता परिपूरणीया । यद् भवान् तव सुतश्च उभौ अपि मिलित्वा एकं अपरं नव्यं देवालयं विरचयेताम् । तावत्कालपर्यंतं त्वया करच्छेदो नैव कार्यः " इति ।

' तथास्तु ' इत्यवदत् जक्कणः । राजाज्ञानुसारेण उभाभ्यां पितापुत्राभ्यां नवीनः देवालयः अतीव सुन्दरतर एव निर्मितः । अद्यापि बेलूरग्रामे (मैसूर) द्वौ देवालयौ वर्तेते । एकस्मिन् देवालये प्रतिष्ठापिता चेन्नकेशवमूर्तिः नाभीमूले भिन्ना दृश्यते । तत्पार्श्वे एव महानेव एकोऽपरः देवालयः जक्कणकुलस्य वंशपारम्परीण-शिल्पकलाकौशल्यं जगत एव निदर्शयद् उत्तिष्ठति । अहो सर्व-कलास्वपि सर्वातिशायित्वम् भारतवर्षस्य ।

(अस्मिन् गदगनगरे वर्तमाना श्री वीरनारायणप्रतिमाऽपि तेनैव जक्कणाचार्येण तस्यैव महाराज विष्णुवर्धनस्य आज्ञया निर्मिता इति गीयते । तस्या एव प्रतिकृतिः मुखपृष्ठे अस्मिन्नङ्के प्रकाशिता । )

---

## अभिनन्दनम्

गतांकेषु अस्माभिः कृतां प्रार्थनां मानयित्वा बहुभिः एव ग्राहकैः मूल्यं स्वयं प्रेषितम् । तेन वयं अतीव सन्तुष्टाः । धनप्राप्तिं अभिनन्दनानि च प्रत्येकं पत्राणि विलिख्य निवेदयितुम् अवकाशाभावात् धनाभावाच्च नैव शक्नुमः । अतः अत्रैव मधुरवाणीमुखान्तरं प्रेषितधनान् नः ग्राहकान् पुनः पुनः अभिनन्द्य अभिवन्द्य च कृतज्ञताभावं प्रदर्शयामः । इतैरपि तीव्रमेव शुल्कं प्रेषणीयमिति । —सं.

## रष्यन् भाषापि संस्कृतसन्ततिः एव

ग्रीक ल्याटिन् जर्मन् इंग्लिशप्रभृतयः पाश्चात्यभाषाः संस्कृतादेव पूर्वं उत्पन्नाः इति पाश्चात्यदेशीयाः भाषाशास्त्रज्ञाः प्रतिपादयन्ति। इयन्तं कालं रषियादेशः परं लोहमये प्राकारे गूढः अज्ञातश्च आसीत्। इदानीं च तदेतल्लोहाच्छादनं किञ्चिदिव अपसारितमिव दृश्यते। अत एव अद्य बहव एव विदेशीयाः रषियादेशं गच्छन्ति। तत्रत्य-जनानां रीतीः, नीतीः, सम्प्रदायान् सामाजिकसुव्यवस्थादिकान् भाषा-बन्धान् भावानुबन्धान् आचारविचारांश्च साक्षात्कुर्वंति। तत्रापि रष्यन्भाषायाः साहित्यस्य व्याकरणस्य सूक्ष्मपरिशीलनं कृतवन्तः भारतीयाः पण्डिताः आश्चर्यचकिता एव भवन्ति।

सुसूक्ष्मपरीक्षणानंतरं अत्याधुनिकसाहित्यमीमांसकाः एवं अत्याश्चर्यकरं सिद्धांतं घोषयन्ति यत् समग्रे युरोपखंडे अथवा पाश्चात्य-प्रदेशे संस्कृतस्य अत्यंतसमीपतरा अतीव निकटसम्बंधशालिनी भाषा नाम रषियन् भाषा एवेति। शब्दसिद्धौ पदपद्धतौ वचनरचनायां ध्वन्यध्वनि च रष्यन् भाषा साक्षात् संस्कृतोद्भवा इव प्रतिभाति। नचैतत्साहश्यं काकतालीय इति वक्तुं शक्यते। यतो हि व्याकरण-प्रक्रियासु अपि विचित्रा एव एकरूपता दृश्यते। नचेदृशं सर्वविधं साम्यं आकस्मिकमिति उपेक्षितुं शक्यते। उदाहरणार्थं परिशील्यं-तामधस्तनाः पंक्तयः—

Sperva agon patom duim (स्पर्व अगन् पतम दुयिम) इतीदं रष्यन्भाषागतं वाक्यम। अस्य संस्कृतरूपं "पूर्वं अग्निः पश्चात् धूम" इति।

संस्कृते 'ध्वजिनी वाहिनी सेना' इति अमरकोशादिषु वाहिनी-शब्दः सेनार्थे प्रयुज्यते। तथा 'वाहिनी पृतना चमूः' इति विशिष्ट संख्यायुक्तगजाश्वरथैः सम्पन्नं सैन्यबलं अपि वाहिनीत्युच्यते इति कोशे निर्दिष्टं। तद्यथा—

'एको रथः गजश्चैकः नराः पञ्च पदातयः।
त्रयश्च तुरगास्तज्ञैः पत्तिरित्यभिधीयते।'

इति पत्तिशब्दार्थः विवृतः वर्तते। ईदृशीभिः 'तिसृभिः पत्तिभिः सेनामुखं, त्रिभिः सेनामुखैः गुल्मः, गुल्मत्रयेण गणः, त्रिभिः गणैः वाहिनी इति वाहिनीशब्दस्य विशेषार्थः प्रतिपादितः दृश्यते। अयं च

संस्कृतसाहित्ये विशिष्टार्थे चिराद् उपयुज्यमान: 'वाहिनी' शब्द: रष्यन् भाषायामपि तथाविधे एव सैन्यबलार्थे चिराद् उपयुज्यते। तत्रापि अतीव आश्चर्यं नाम अयं शब्द: संस्कृते यथा तादृशस्वरूपे एव रष्यन् भाषायाम् अद्यापि उच्चार्यते। न तत्र स्वर-व्यञ्जन-मात्रा-अनुस्वार-रेखोपरेखादिषु अपि विशेषत: अन्तरं वैलक्षण्यं विकारो वा सञ्जात इव अनुभूयते। उदाहरणार्थं गृण्हीम: यत्किमपि एकं संस्कृतं वाक्यम् 'अर्जुन: ब्रवीति हे अच्युत मध्ये उभयो: वाहिन्यो: मे रथं स्थापय' अस्य गीतावाक्यस्य रष्यन् भाषायां तत्रत्यपंडितै: एव अनुवाद: कृत:। स इत्थं अर्जुन गविरत् "गे अच्युत मेज्जु ओबो वाथिन्यो मो करेगुस्तावी"।

## सर्वनामभि: क्रियाविशेषणनिष्पत्ति:

संस्कृते पाणिने: आदेशानुसारं सरलसर्वनामस्य एव 'दा' शब्द संयोजनेन कालसूचकक्रियाविशेषणानि निर्मीयन्ते। इयमेव च पद्धति: रष्यन् भाषायामपि अविकृता यथावच्च दृश्यते—

परीक्ष्यतां तावदियं सादृश्यसूचिका शब्दपट्टिका–

| सर्वनाम | संस्कृते | रष्यन्भाषायाम् |
|---|---|---|
| किम् | कदा | कोगदा |
| तद् | तदा | तोग्दा |
| अन्यद् | अन्यदा | इनोग्दा |
| सर्व | सर्वदा | व्हैग्दा |

## शब्दसाम्यम्

संस्कृतरषियादेशयो: शब्देषु विलक्षणमेव साम्यम् दृश्यते।

"विचित्रैव हि सादृश्यलक्ष्मीरुल्लसतिद्वयो:"

वंगभाषायाम् 'ओ' कारस्य संस्कृतहिंद्यादिषु 'अकारस्येव रष्यन्भाषायां 'ए' कारस्य प्राधान्यं वर्तते। संस्कृतरकारस्य रषिया-भाषायां लकारादेश: भवति।

परिशीलयतां तावदियमत्र भाषाद्वयबोधिनी मिथ: सदृशशब्द-श्रेणिका—

| संस्कृतम् | रष्या | संस्कृतम् | रष्या |
|---|---|---|---|
| विना | वने | षट् | शेस्ट |
| बहि: | वैझ | अभ्रक | अव्लक |
| स्वसृ | स्वेस्ट | दरी | दलिना |
| द्वार् | द्वेर | धनुष् | द्लुष् |

वचनरचनासु तु इयं साद्दश्यकल्पना अतितीव्रतरस्वरूप एव गोचरी भवति । केषांचन रष्यन्वाक्यानां उच्चारणे क्रियमाणे किमयं रष्यन्भाषायां भाषते अथवा संस्कृत एव भाषते वा इति संशय एव भवति । प्रत्यक्षीक्रियन्तां तादृश्योऽपि काश्चन पदपंक्तयः भाषाशास्त्रधुरीणैः प्रदर्शिताः—

| संस्कृते | रष्यन् |
|---|---|
| एते द्वे मदीये स्वसारौ | एते द्वे मोये स्ये स्त्रे |
| ते त्वदीये स्वसारौ | ते ओवे त्वोये स्ये स्त्रे |
| आखेटक त्वं किं पिशितं अस्सि? नैतत् | ओखेत्तिक त्वि लिपिशित एषि? नेत् |
| मदीया स्नुषा न स्वपिति दिवा | मोया सोखा ने स्पाति द्नोम |
| स्थविरा माता ददाति मधु समं सं मृतस्यै विधवायै उभाभ्यां च सूनुभ्याम् | स्तरया माति दयोत भ्योदा समासं एतयेव्लद्वये इ उभाभ्यां सिनोभाम |

वस्तुतो विचार्यमाणे एतादृशः घनिष्ठः सम्बन्धः, नेदिष्ठं च बांधव्यं जगति न कयोरपि भाषयोः विद्यमानं उपलभ्यते। वस्तुगत्या संस्कृतस्य साक्षात् सन्ततिः औरससन्तानमिति कथ्यमानासु पाली अर्धमागधी हिंदी गुजराथी बंगाली महाराष्ट्रचादि आर्यभाषासु अपि एतादृशं विचित्रतरं संस्कृतसादृश्यं नैव वर्तते । सत्यं वक्तव्यं चेत् उभयभाषागतपद-वाक्य-व्याकरण-वचन-रचनादीनां परीशीलनानन्तरं यः कोऽपि भाषाशास्त्रज्ञः एतादृशमेव निर्णयमुपधावति यत् अनयोः उभयोः भाषयोः मध्ये न सादृश्यं वर्तते किंतु ताद्रूप्यमेव वर्तते । तत्र विद्यमानं दृश्यमानं वा न साम्यं किंतु तादात्म्यमेव । अर्थात् रषियादेशगताः जनाः नान्यां यां कामपि पाश्चात्यभाषां भाषन्ते किंतु पाश्चात्यध्वनौ, ऐरोप्योच्चारणप्रणाल्यां संस्कृतमेव किञ्चिदिव व्यत्यस्तस्वरूपेण भाषन्ते । अस्मिन् विषये उभयसाहित्यव्याकरणयोः तौलनिकाभ्यासः सुसूक्ष्मसंशोधनं च अत्यावश्यकम् ।

# शकारः

"मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मम निद्रामाक्षिपतन्ती प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती॥"

"चाणक्येन यथा सीता मारिता भरते युगे ।
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥"

एते च असंबद्धाः श्लोकाः संस्कृतनाटकेषु तत्र तत्र उपलभ्यन्ते । एतादृशानन्वितामंबद्धपद्यमयप्रलाप-सूक्तानां आद्य द्रष्टा नाम शकारः । नाटकेषु शकारस्य निरर्थकाः क्वचिदनर्थकाः उत्सूत्राः अशुद्धाः अबद्धाश्च अपि श्लोकाः हास्यरेखां अंकूरयति कदाचिद् अधरतटेषु । परं कोऽयं शकारः ? कुतो वा अयं असंबद्धप्रलापी उन्मत्तभाषीव च साहित्ये रेखितः । संस्कृतशब्दा अपि न तन्मुखादाविष्कारिताः । नाटकानि लक्षणग्रन्थाश्च अपहाय अन्यत्र क्वचिदपि अयं 'शकार' इति नामा संस्कृतसाहित्ये न दृष्टपूर्वः न वा श्रुतपूर्वः । संस्कृते 'आर्' अन्ताः भूयांस एव शब्दा उपलभ्यन्ते । यथा– गौधार, मौण्डार, जाण्डार, पाण्डार, जाडार*, मन्दार, मार्जार, कर्मार इत्यादयः । 'उदीच्याः 'आर्' (क्) प्रत्ययान्तान् शब्दान् प्रयुञ्जन्तीति पाणिनिः वदति । तेन औत्तरेयेषु वाग्व्यवहारेषु 'आरांत'शब्दाः भूयिष्ठं व्यवहृता आसन्निति ज्ञायते । अयं च उत्तरप्रदेशः हिन्दुस्थानस्य पर्षियादेशस्य च मध्यवर्ती भूखण्डः भवति । पर्षियन् भाषायां च 'आरान्ताः' शब्दाः असंख्या एव उपलभ्यन्ते । यथा– तुखार, गान्धार, अभिसार, कतार, यतार, (संस्कृते कतर यतर) इत्यादयः । 'हयवार' इति शकनामधेयमपि आर् इति प्रत्ययसंश्लिष्टमेव निष्पन्नं भवेदिति प्रतिभाति । ईदृशानेकशब्दस्वरूपपर्यालोचनया 'शकार'

* एते ईदृशाश्च अन्येऽपि केचित् शब्दाः वैदिकवाङ्मये उपलभ्यन्ते ।

शब्दोऽपि इराणियन् (पर्षियन्) भाषागत 'शक'शब्दस्य 'आर' इति प्रत्ययसंयोगेन सिद्धः स्यादिति तर्कः सत्याश्लिष्टः प्रतीयते। शकारेण भाष्यमाणा, 'मागधीति' लाक्षणिकैः निर्दिश्यमाना पर्षियन् भाषापि अस्मदभिप्रायमेव सर्वात्मना पुष्टीकरोति।

शकराजाः माळव, गुजराथ, काठियावारप्रभृतिषु प्रदेशेषु ईसवीय प्रथमशतकस्य उत्तरार्धाद् आरभ्य चतुर्थशतकपर्यन्तं शासनं कृतवन्तः। 'शकार'पात्रं एतेषां शकानां विषये विद्यमानां भारतीयसुशिक्षितानां तिरस्कारभावनां द्योतयति।

भारतीयेषु रूपकेषु शकारसदृशं अत्यंतनीचतमं हास्यास्पदं च अधमाधमं पात्रं नैव रेखितमवलोक्यते। भारतीय नाटकेषु दृश्यमानः शकारः अयोग्यः, मिथ्याभाषी, असंबद्धभाषी, वञ्चकः, कामुकः, चोरः, जारः, अविवेकशिखामणिः, दुर्गुणखणीभूत एव उपलभ्यते।

नाट्याचार्यः भरतमुनिः, दशरूपकप्रणेता धनंजयश्च शकारं म्लेञ्छ-आभीरादिनीचजातीयजनेषु एव परिगणयति। शूद्रकस्य शकारः बाणस्य हर्षचरितगतश्च शकारः कामांधौ मूढौ परमतासहिष्णू एव गोचरीभवतः। मृच्छकटिके च शकारः बौद्धानां विषये अवाच्यशब्दानुच्चार्य स्वस्य जघन्यतां विचारनैच्यं हृदयकालुष्यं च व्यंजयति। एताभ्यां द्वाभ्यामेव शकारपात्राभ्यां तदानीं शकराजानां विषये हिंदूनां तत्रापि सुज्ञ-तज्ज्ञसमाजस्य भावना कियद्घृणापूर्णा उपहासगर्भिता च आसीदित्यत्र स्फुटीभवति।

शकारस्य पात्रं परिपूर्णस्वरूपे चित्रीकृत्य चारुचमत्कृतिं सचेतसां चेतसि सुचेतयन् चतुरमतिः कविचक्रवर्ती नाम शूद्रक एव। तस्य च इदं सुप्रसिद्धं मृच्छकटिकनाटकं पूर्वं शकराजानां विक्रमादित्यस्य च राजधान्यां उज्जयिन्यां [illegible] । उज्ज-

मतसंस्थापकाचार्यः—

# स्वामी दयानन्द सरस्वती

( लेखकः — नारायणशास्त्री काङ्करः, जयपुरम् )

अस्माकं भारतीय-संस्कृतिः संसारस्य पुरातन-संस्कृतिषु प्रधानतमा परिगण्यते ऐतिहासिकैः। यदा मिश्र-रोम-यूनानादिदेशाः स्व स्व संस्कृतिनिर्माणे अहमहमिकया अग्रे प्रवर्धमाना आसन्, तदा अत्रत्या इयं संस्कृतिः आत्मगौरवस्य सर्वोच्च-शिखरम् आसीना व्यराजत । समये समये अनेके महापुरुषा इह अवतीर्य इमाम् अस्मद्देशीयां संस्कृतिं श्रेष्ठतायाः चरम-सीमां प्रापयितुं प्राणपणेन प्रयत्नं कृतवन्तः ।

यवनकाले भारतीया संस्कृतिः शीर्ण-विशीर्ण-शरीरा समजायत, परं तदुत्तरं पाश्चात्यानां भारते आगमनेन सह देशे राष्ट्रिया सांस्कृतिकी च चेतना जनानां मनःसु पुनः प्रास्फुरत् । एकोनविंश-शताब्द्यां महामहान्तः धार्मिका आचार्या अस्मिन् शुभकर्मणि भागं गृहीतवन्तः । राम मोहन 'राय'—केशवचन्द्र

---

यिन्याः समन्तात् सिथियन् राजमहाराजाः चिरं शशासुः । तेषां दुःशासनतन्त्रसन्त्रस्तानि, उज्जयिनीप्रांतपरिसरवासिनां हृदयानि शकारपात्रस्य अत्युत्तमान्येव रङ्गस्थलानि समपद्यंत । जनतायाः भावानुभावानुगुणं काव्यकिन्नर्याः मृदुमधुरतन्त्रीः निपुणं निक्वाणयन् सरसकविः शूद्रकः उज्जयिनीराज्यसीमनि शकारपात्रसृष्टेः अत्यनुकूलं वातावरणं, समुचितां सर्वामपि सामग्रीं अधिगतवान् भवेत् । अत एव स्वेच्छाप्रकारं जनमनोऽनुकारं च शकारं निर्माय शकस्वभावविकारं प्रदृश्य तद्दुःशासनस्य निकारं प्रतीकारं च करोति प्रजाप्रतिनिधिः राजकविः कविराजश्च शूद्रकः । 'शूद्रकस्य शकार' इति लेखमेकं अङ्कान्तरे प्रकटीचिकीर्षामः ।

'सेन'–स्वामि दयानन्द 'सरस्वती' प्रभृतयः महापुरुषा अस्या एव सांस्कृतिक-क्रांतेः सूत्रधारा आसन् । एषु स्वामि दयानन्दस्य व्यक्तित्वम् अत्यन्तं प्रभावशालि आकर्षकं च वरीवर्ति । असौ जीवनस्य प्रत्येकं क्षेत्रे भगवता मनुना सह इमां घोषणां कृतवान्– "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" इति । "वेदोऽखिलो धर्ममूलम्" इति च ।

सामाजिक-जीवनस्य सुधारः, राजनैतिकक्षेत्रे स्वातन्त्र्य-भावनाया बीजारूपणम्, आर्थिकक्षेत्रे गोपालनस्य महत्वबोधनम्, समस्तसंसारे भारतीय-संस्कृतेः प्रचारश्च संक्षेपेण स्वामि दयानन्दस्य प्रशस्ततम-कार्याणां रूपरेखा । स स्वयं संस्कृतभाषायाः प्रकांड-पण्डितः, वेदवेदाङ्ग-ज्ञाता, शास्त्रार्थमहारथी, सच्चरित्रः, आजन्मब्रह्मचारी साधु-संन्यासी च आसीत् । एवं स्वामिदयानंदस्य व्यक्तित्वे अतीत-वर्तमानयोः सर्वेषां एव महापुरुषाणां चरित्राणि प्रतिभासन्ते ।

तदानीं समय-माहात्म्याद् विशेष-परिस्थितिवशाद् वा हिन्दु-जनता स्वीय-समुन्नतादर्शेभ्यः अतीव अधः पतिता आसीत् । सर्वत्र धूर्तानां पाखण्डिनां च साम्राज्यं विस्तृतं बभूव । ते उच्चावचं वाग्-विलासैः ताम् अबोध-जनतां वशीकृत्य स्वार्थ-साधने पश्चात्-पादा न तस्थुः । तस्या एतादृशीं दशां दृष्ट्वा अस्माकं चरित्रनायकः श्री स्वामी महोदयः दयार्द्र-हृदयः विषण्ण-वदनश्च संजातः । असौ हरिद्वारे १८२३ संवत्सरे "पाखंड-खंडनीसभां" संस्थाप्य वैदिकधर्मं प्रचारयन् प्रसारयन् चैत्र-सुदि-पञ्चम्यां १८२३ संवत्सरे मुंबापुर्यां "आर्यसमाज"स्य स्थापनां चकार । स्थाने स्थाने शास्त्रार्थैः विरोधिनः सयुक्ति परास्तान् कुर्वतः, अप्रतिमया प्रतिभया सहृदयान् मनीषिणः मोहयतश्च तस्य शाहपुरा-बडोदा,

जोधपुर-प्रभृतिदेशानां राजानः महाराजाः, अनेके धनि-मानि-सज्जनाश्च शिष्यतां गृहीतवन्तः ।

स्वामी दयानन्द आसीत् जन्मना गुर्जर-देशीयः, परं असौ भगवद्-बुद्धादिवत् स्वधर्मस्य अर्थात् आर्यधर्मस्य प्रचारं राष्ट्रभाषा (हिंदी) द्वारा एव,—यां स आर्यभाषा-नाम्ना व्यवहरति स्म, कर्तुं इयेष । संस्कृत-हिंदी-प्रचार-लक्ष्येण असौ ऋग्वेदादिभाष्य-भूमिका-सत्यार्थप्रकाश-व्यवहारभानु- संस्कारविधि - वेदाङ्गप्रकाशादिग्रन्थान् च हिंद्याम् एव लिलेख । सहैव इमाम् अपि घोषणां कृतवान् यद् एषां ग्रन्थानाम् अनुवाद इतरस्यां कस्याञ्चिद् भाषायां न करणीयः । यः तस्य विचारान् ज्ञातुम् अभिलषेत्, आर्यभाषां संस्कृतं अधीयीत । एतदतिरिक्तं स आर्यभाषां आर्य-मात्रस्य कृते आवश्यकीं घोषयामास । अतः सहस्रश आर्यसमाजिनः हिंदीं धर्मभाषां मत्वा पठितवन्तः ।

स्वामि महोदयद्वारा संस्थापितेषु गुरुकुलेषु, कन्यापाठशालासु, विद्यालयेषु, महाविद्यालयेषु च हिंदी पर्याप्तं प्रचचार । पञ्चनद-सदृश उर्दू-भाषा-भाषि-प्रान्ते अपि हिन्दीभाषायाः उन्नतिः तस्य एव प्रेरणायाः फलम् । न केवलं हिन्दीप्रचारे एव देशवासिभिः स्वामि-महोदयस्य सहयोगः प्राप्तः, अपि तु विशुद्ध-हिन्दीज्ञानां संघटने अपि, यत् किल तस्मिन् समये अत्यन्तम् आवश्यकम् आसीत् । एष एव हेतुः यद्— अद्य हिन्दी आत्मसत्तां स्थापयितुं समर्था जाता । आधुनिकयुगे तस्य सेवा हिन्दी-साहित्ये अपि सदा स्मरणीया स्थास्यति ।

निजधर्म-देश-वेश-भाषाभिमानी, वैदिकसंस्कृति-प्रचारकः महामहोपदेशकः, देशोद्धारकः अयं तेजस्वी महापुरुषः देशस्य समुन्नत्यै सुख-शान्ति-समृद्ध्यै च कायेन वाचा मनसा कर्मणा प्राण-

पणेन प्रायतत । देशस्य दुर्दैवात् यथा अहिंसाया उपासकः राष्ट्रपिता महात्मा गान्धी हिंसकस्य एव हस्तेन मृत्युं प्राप, तथैव आजन्म ब्रह्मचारी हृष्ट-पुष्ट-शरीरः श्रीस्वामी दयानन्दसरस्वती महानुभावः अपि योधपुराधीशस्य वेश्यायाः षड्-यन्त्रेण जगन्नाथ-'पाचक' द्वारा निर्दयं भोजने विषदानेन १८४० संवत्सरे दीपावली-दिने एव क्षणभंगुर-शरीरं तत्याज । किन्तु यशः शरीरेण त्रिकालं जीवमानः अद्यापि स स्वर्ग-शिखरम् आरुह्य सांसारिक-जनात् सुख-शान्ति-लाभार्थं चारित्र्यशुद्धये अहिंसायै च ऊर्ध्वबाहुः सन्दिशति ।

## आद्याचार्याणाम् अध्यक्षीयादेशः

रायच्चूरनगरे संवृत्ते कर्नाटक साहित्यपरिषदधिवेशने अध्यक्षपीठाद् भाषमाणाः श्री रङ्गाचार्य आद्य, ( M.A. लण्डन् ) महोदयाः "संस्कृतभाषायाः सम्यगध्ययनं विना कर्णाटकभाषा सर्वाङ्गीणां अभिवृद्धिं प्रगतिं च प्राप्तुं नैव शक्नोति । अतः स्व स्व मातृभाषाणां प्रांतभाषाणां राष्ट्रभाषाणां च वृद्धिं शुद्धिं सिद्धिं प्रसिद्धिं वा कामयमानैः सर्वैरपि संस्कृतं सम्यगध्येतव्यम्" इत्यभिप्रायकान् कांश्चन विचारान् प्रतिपादितवन्तः । एते च विचाराः न केवलं कन्नडिगैः किन्तु सर्वभाषाभाषिभिरपि अवश्यं परिशीलनीयाः । कर्णाटकस्य अत्यन्तसुप्रसिद्धे 'आद्य' इति महिते आचार्यकुले जातानां श्री रङ्गाचार्याणां ईदृशान् संस्कृतोत्कर्षप्रयोजकान् उद्गारान् सानन्दम् अभिनन्दामः ।

इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ।

---

गैर्वाण्यां परस्परालापोऽपि अजायत। अनन्तरं बालकविः[1] 'पण्ढरीनाथाचार्यः' इति नाम्ना मधुरवाण्यां मुद्रितानि श्रीमतां पद्यान्यपि नयनसरणिसादभूवन्। किमेतन्मया सत्यं कल्प्यते? चेत् सत्यं प्रमोदावहं, न चेत् न कोऽपि विषादः, केऽपि पण्ढरीनाथाचार्याः सन्तु 'मधुरवाणीं' रसवतीं विधातुं ते प्रपूर्णतया समर्थाः । —अनन्त उपाध्ये

---

1 सत्येयं घटना । तदाऽहं पंचदशवर्षीयः भ्रातुः शस्त्रक्रियावेदनामपनोदयितुं शास्त्रालापान् करोमि स्म । —सं.

Regd. No. B 7171

 

## प्रणयपूर्वकं निवेदनम्



अयं च नवमः अङ्कः । गताङ्केषु अस्माभिः विहितां सूचनां याचनां प्रार्थनां प्रलापं विलापं च श्रुत्वा विद्रुतांतःकरणाः शताधिकाः एव वाचकाः वार्षिकधनं स्वयं 'मनियार्डर' द्वारा प्रेषितवन्तः । तेषां दत्तधनानां उपकारं कथं विस्मरामः ? कैर्वा-शब्दैः वर्णयामः । सर्वथा अधमर्णीकृता एव एतैः शताधिकैः ग्राहकैः ।

### परन्तु हा हन्त

प्रेषितधनाः शताधिकाः अप्रेषितधनास्तु सहस्राधिकाः । प्रत्येकं पत्रं विलिख्य याचनां कर्तुमपि वयं अवकाशं अर्थानु-कूलतां वा न लभामहे । व्ही. पी. करणे प्रत्यावर्तनस्य महती भीतिः, अर्धरूपकस्य अधिकव्ययश्च । अतः किं कर्तव्यविमूढः तूष्णीं स्थितोस्मि । अद्य वा श्वो वा नवाङ्कान् गृहीतवन्तः शुल्कमपि स्वयमेव प्रेषयेयुरेवेति विश्वासेन नियतमङ्कान् प्रेषयन्नेव अस्मि । अमुं च नवमं अङ्कं अधिगत्यापि इतरे सर्वेऽपि ग्राहकधनं प्रेषयन्तु इति सप्रणयं प्रार्थये । वाचकानां मनःखेदो भवेदिति प्रार्थनामपि उच्चस्वरेण विधातुं बिभेति संकुचति च नश्चेतः । सौम्यशब्दान् न कर्णे कुर्वन्ति ग्राहकाः । कठिणशब्दैः कुप्यन्ति, विमानयन्ते विमुखीभवन्ति च । अशब्दापिताश्च स्वयं न प्रेषयन्ति । विना धनं पत्रिका एव न प्रचलन्ति । किं कार्यं सम्पादकेन ? ? ?

वाचका एव उत्तरयन्तु ।

—सम्पादकः



# मधुरवाणी



संस्कृतमासपत्रिका







उद्वेलव्यासतन्त्रव्यवसितनिखिलाभिज्ञहृद्यानवद्या-
नन्तत्र्यन्तभावप्रकटनघटनासर्वतन्त्रस्वतन्त्रे ॥
संवर्ण्ये मन्त्रवर्णैरनितरविषयस्पर्शिभिः पावमाने
रूपे लोकैकदीपे प्रसरतु हृदयं मामकं **मध्वनाम्नि** ॥१॥

यो विप्रलम्भविपरीतमतिप्रभूतान्
वादान्निरस्य कृतवान् भुवि तत्ववादम् ॥
सर्वेश्वरो हरिरिति प्रतिपादकं तम्
**आनन्दतीर्थ**मुनिवर्यमहं नमामि ॥२॥

सम्पादकः प्रकाशकश्च
**पं. पण्ढरीनाथाचार्यः गलगली**

वार्षिकं मूल्यम् (५) रूपकपञ्चकम्

**१९५६ फेब्रुवरी (माघ) मासस्य सञ्चिका गदग**

**श्री मध्वनवमी- श्रीकृष्णपर्यायोत्सवादिपरिचयात्मकलेखललिता**

## ❀ मधुरवाण्याः महासंरक्षकमण्डली ❀

| | |
|---|---|
| श्रीमन्तः पद्मनाभराव वैद्य महोदयाः | प्रतिवर्षं ५०५ रू. प्रदाः |
| श्री श्री कूडलीशृंगेरीमठाधीशस्वामिपादाः | ,, १०१ ,, |
| श्री श्री भंडारगिरिमठाधीशस्वामिपादाः | ,, १०१ ,, |
| श्री श्री पेजावरमठाधीशस्वामिपादाः | ,, १०१ ,, |
| श्री. सी. डी. देशमुख, भारतगणराज्य वित्तमन्त्रिणः | ,, १०१ ,, |

## —▢ विषयानुक्रमः ▢—



## मधुरवाण्याः संरक्षणार्थं प्रार्थना

मधुरवाण्याः द्वादशः अङ्कः महाग्रन्थरूपेण प्रकटीचिकीर्ष्यते । तदर्थं व्ययः महीयानेव भवेत् । अतः अस्माकं ग्राहकैः पोषकैः संरक्षकः महासंरक्षकैश्च सद्य एव समधिकसाहाय्यदानेन रक्षणीया पत्रिका इति विज्ञापना । —सम्पादकः

Printed at the Hombali Printery, Gadag
by H. S. Hombali and Published by Pandharinathacharya
Galagali at Gadag.

# मधुरवाणी

शके १८७७ ] श्री मन्मथसं. माघसञ्चिका [ दशमोऽङ्कः


## श्रीकृष्णकर्णामृतम्

लेः श्री लीलाशुकः

शैवा वयं न खलु तत्र विचारणीयम् । पञ्चाक्षरीजपपरा नितरां तथापि ॥
चेतो मदीयमतसीकुसुमावभासम् । स्मेराननं स्मरति गोपवधूकिशोरम् ॥१॥
वरमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तचारखिन्नाः ॥
विचिनुत भवनेषु बल्लवीनाम् उपनिषदर्थमुलूखले निबद्धम् ॥२॥
स्वाती सपत्नी किल तारकाणां मुक्ताफलानां जननीति रोषात् ॥
सा रोहिणी नीलमसूत रत्नं कृतास्पदं गोपवधूकुचेषु ॥३॥
ओष्ठं मुञ्च हरे बिभेमि भवता पानैर्हता पूतना
कण्ठाश्लेषममुं जहीहि दलितावालिङ्गनेनार्जुनौ ॥
मा देहि च्छुरितं हिरण्यकशिपुर्नीतो नखैः पञ्चतां
इत्थं वारितरात्रिकेलिरवताल्लक्ष्म्यापहासाद्धरिः ॥४॥
रामो नाम बभूव, हुं, तदबला सीतेति, हुं, तां पितुः
वाचा पञ्चवटीतटे विहरतस्तस्याहरद्रावणः ॥
निद्रार्थं जननीकथामिति हरेर्हुङ्कारतः शृण्वतः
"सौमित्रे क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥५॥
विहाय कोदण्डशरौ मुहूर्तं गृहाण पाणौ मणिचारु वेणुम् ॥
मायूरबर्हं च निजोत्तमांगे सीतापते त्वां प्रणमामि पश्चात् ॥६॥
अयं क्षीरांबोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिः क्षीरोपनयनधिया गोपतनयः ॥
अनेन प्रत्यूहो व्यरचि सततं येन जननी
स्तनादप्यस्माकं सकृदपि पयो दुर्लभमभूत् ॥७॥

हस्तमाक्षिप्य यातोऽसि बलात् कृष्ण किमद्भुतम् ॥
हृदयाद् यदि निर्यासि पौरुषं गणयामि ते ॥८॥

तमसि रविरिवोद्यन्, मज्जतामम्बुराशौ प्लव इव. तृषितानां स्वादुवर्षीव मेघः ॥
निधिरिव विधनानां, दीर्घतीव्रामयाणां भिषगिव कुशलं नो दातुमायातु शौरिः ॥९॥

त्वयि प्रसन्ने मम किं गुणेन त्वय्यप्रसन्ने मम किं गुणेन ॥
रक्ते विरक्ते च वरे वधूनां निरर्थकः कुंकुमपत्रभङ्गः ॥१०॥

उर्व्यां कोऽपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया
तेन त्वं दिवि भूतले च सततं गोवर्धनेति स्तुतः ॥
त्वां त्रैलोक्यधरं वहामि कुचयोरग्रे न तद्गण्यते
किं वा केशव भाषणेन बहुना पुण्यैर्यशो लभ्यते ॥११॥

देवक्या जठराकरे समुदितः क्रीतो गवां पालिना
नन्देनानकदुन्दुभेर्निजसुतापण्येन पुण्यात्मना ॥
गोपालावलिहारमुग्धतरलो गोपीजनालंकृतिः
स्थेयान्नो हृदि सन्ततं सुमधुरः कोऽपीन्द्रनीलो लसन् ॥१२॥

शम्भो! स्वागतमास्यतामित इतो वामेन पद्मासन!
क्रौञ्चारे! कुशलं सुखं सुरपते! वित्तेश! नो दृश्यसे ॥
इत्थं स्वप्नगतस्य कैटभजितः श्रुत्वा यशोदा गिरः
'किं किं' बालक जल्पसीति रचितं 'धूधू' कृतं पातु नः ॥१३॥

मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयः
तन्नास्त्यद्य कदास्ति वा निशि निशा का वाऽन्धकारोदयः ॥
आमील्याक्षियुगं निशाप्युपगता देहीति मातुर्मुहुः
वक्षोजांशुककर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥१४॥

राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे ॥
तस्यास्तनस्तबकचञ्चललोलदृष्टिः देवोऽपि दोहनधिया वृषभं निरुन्धन् ॥१५॥

वत्सपालचरः कोऽपि वत्सः श्रीवत्सलांछनः ।
उत्सवाय कदा भावीत्युत्सुके मम लोचने ॥१६॥

वन्दे मुरारेश्चरणारविन्दद्वन्द्वं दयादर्शितशैशवस्य ।
वन्दारुवृन्दारकवृन्दमौलिमन्दारमालाविनिमर्दभीरु ॥१७॥

सम्पादकीयम्

# नन्दाम निन्दाम वा

अधिकारप्राप्तेः अनन्तरम् योग्यतावतां च सर्वेषां राजगौरवं समर्पणीयमिति राष्ट्रपतिः जानाति इच्छति यतते यशस्वी भवति च तत्र। गुणपक्षपाती अयं राष्ट्रनायकः स्वस्य संकल्पानुसारेण राष्ट्रस्य कोणे कोणे विद्यमानान् विद्योतमानांश्च गायकान् शिल्पिसार्वभौमान् कविचक्रवर्तिनः चित्रकारान् सामाजिककार्यकर्तृन्श्च स्वयं आहूय पुरस्कारं पारितोषिकाणि पदवीः प्रमाणपत्राणि सुवर्णपदकानि भूरिधनं च प्रदाय बहुमानयति। सत्यमनेन समुचितेन कर्मणा तृप्ता भृशमानन्दीमः अभिनन्दीमश्च 'यथाकालप्रबोधिनं' राजेन्द्रप्रसादम्।

### किमपराद्धं पण्डितैः ?

परं सर्वानपि गुणिनः आकारयन् आदरयन् अर्चयंश्च संस्कृतज्ञः संस्कृताभिमानी च राष्ट्रपतिः संस्कृतपण्डितान् किमुपेक्षते ? जन्मन्येकवारं केषाञ्चिदंगुलिगणनीयानां पण्डितानां पादप्रक्षालनमात्रेण किं वा हितं साधितं भवति ? कृषीवलानां नटानां विटानामपि राजगौरवं समर्पयन् राष्ट्रपतिः संस्कृतपण्डितान् राजमानस्य अनर्हानेव मन्यते ?

प्रतिवर्षं भारतसर्वकारेण शताधिकेभ्य एव भारतपुत्रेभ्यः राष्ट्रपदकानि बिरुदानि च प्रदीयंते। संस्कृतपंडितेभ्यः नैकापि पदवी प्रशस्तिपत्रिका वा प्रदीयते। न तावता पंडितानां काचित् क्षतिः

"त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः,
का नो मानद मानहानिरवनौ नैके गुणज्ञा नराः॥
गुञ्जापुञ्जपरम्परापरिचयाद् भिल्लीजनैरुज्झितं
मुक्तादाम न धाम धारयति किं कण्ठे कुरङ्गीदृशाम्॥"

पूर्वं ब्रिटिशैः विदर्मीयैरपि विदेशीयैरपि पण्डितेभ्यः महामहोपाध्यायादिपदव्यः प्रदीयन्ते स्म । "युष्माभिः कुतो वा महामहोपाध्यायपदवीप्रदानक्रमः प्रतिबद्धः" इति पृष्टे 'पदवी प्रशस्त्यादिप्रदानक्रम एव न अस्मभ्यं रोचते" इति उत्तीर्य शताधिकान्येव पदवी-प्रमाणपत्राणि इतरेभ्यः प्रतिवर्षं वितीर्यंते। संस्कृतपण्डितेभ्यः गौरवार्पणसन्दर्भान् विलोपयितुं कीदृशमपि असत्यविधानं व्याहृतभाषणानि च कर्तुमुत्सहन्ते अधिकारिणः। तावतापि चिरादेव "कालोह्ययं निरवधिर्विपुला च पृथ्वी" इति भवभूतिभुजवल्गनोक्तिमेव पुनरुच्चरन्तः पण्डिताः न कदाचिदपि कुर्कुरायन्ते न जातुचिद् घुर्घुरायन्ते च ।

"ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते ॥
कृच्छ्राय तपसे चैव प्रेत्यानन्तसुखाय च ॥"

इति दृढनिर्धारेण स्वाध्यायप्रवचनाभ्यां न प्रमाद्यन्तः निष्कामा एव वर्तन्ते। तेषां मनसि राजगौरवस्य कल्पनापि नायाति। परं 'यदि मणिस्त्रपुणि प्रणिधीयते न स विरौति न निंदति रोदिति।' तथा पण्डिता अपि मानार्थं स्थानार्थं द्रव्यार्थं वा नैवाक्रुश्यन्ति। पूर्वं त्यक्तसर्वस्वा अपि राजकीयनेतारः यथाद्य अधिकारलाभाय महाकोलाहलं कुर्वन्ति तथा स्वाभिमानिनः विद्वांसः भूम्याकाशमेकीकृत्य न कलकलमाकलयन्ति। 'विद्वांसो वसुधातले निजहिते स्वार्थे च वाचंयमाः' एव। परं तेषां मौनस्य दुरुपयोगं कृत्वा यद्युपेक्षा क्रियते तदा राज्ञामेव वचनीयता भवति। सा च वचनीयता राजेन्द्रप्रसादसदृशानां मा भवतु इत्येव नः मनीषा।

किञ्च विद्वांसः चिरादेव राजभवनानि बहिष्कृतवन्त एव। एकस्य राजगौरवाशां परित्यज्य दूरादेव राजभवनं नमस्कुर्वतः कस्यचित् महाकवेः इयं सुप्रसिद्धा विरागोक्तिः अर्थपूर्णा

चमत्कारकारिणी मननीया च वर्तते । दृश्यताम्–

"न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः ॥
नृपसद्मनि नाम के वयं स्तनभाराऽनमिता न योषितः ॥"

परमीदृशी व्यंग्योक्तिः संस्कृतप्राणे राजेन्द्रप्रसादे, इतरप्रान्तीयाधिकारिषु वा न कदाचिदपि चरितार्था भवतु इति वयं कामयामहे । पुनरीदृशश्लोकसन्दर्भणप्रसङ्गः पण्डितानां न परापतेत् तथा दक्षतामावहन्तु स्वाधिकारादप्रमत्ताः सर्वकारीयाः सर्वेऽपि सर्वाधिकारिणः इति सविनयं सूचयामः ।

## बिडालस्य पयःपानम्

लेखकः– विद्यासागर श्री. के. एल्. व्यासरायशास्त्री, मद्रास

कश्चिद् बिडालः सायाह्ने पाकशालां गतः शनैः ।
दृष्ट्वा तत्र पयस्पात्रं बभूव पुलकाङ्कितः ॥

निर्जनं पाकगृहं निरीक्ष्यासौ मुदान्वितः ।
छादनं क्षीरपात्रस्य शनैश्चिक्षेप शङ्कितः ॥

तस्मिन्नल्पमुखे पात्रे पयोऽत्यल्पमवर्तत ।
तत् पातुं यतमानोऽसौ न शशाक कथञ्चन ॥

ततो बलात् स्वस्य मुखं तत्पात्रान्तः प्रवेश्य सः ।
रुद्धश्वासः क्लिश्यमानश्चक्रे पात्रमधोमुखम् ॥

नापारयत् ततः पात्रान्मुखमाक्रष्टुमात्मनः ।
कोष्णेन पयसा दिग्धो लुलोठ धरणीतले ॥

चेष्टमाने तथा तस्मिन् पात्रध्वनिरभून्महान् ।
सूदो निशम्य तं ध्वानमभ्यन्तरमगाद्द्रुतम् ॥

तं च कण्ठगतप्राणं तस्मात् पात्रादमोचयत् ।
मुक्तमात्रः स सूदस्य दण्डाद्भीतः पलायत ॥

किन्तु तस्योपकारं स स्मरन्निव महामनाः ।
जघान मूषिकान् सर्वान् महानसगतान् निशि ॥

# 'अभङ्गविठल' नाम्नो निर्वचनम्

लेखकः- के. वेंकटारायाचार्यः, सुरत् कलम (दक्षिण कर्णाटक)

यत् कर्णाटकसङ्गीतप्रचारकाणां 'हरिदास' बिरुदभाजां पुरन्दरप्रभृतीनां तात्विक कविशिरोमणीनां यात्रास्थलं पण्ढरपुरम्, तेषां कीर्तनानां मुद्रिका च विठलस्य नाम्ना अस्ति, इति सर्वैः विदितमेव ।

इदानीं तु विटलस्य 'अभङ्गविठलः' इति नाम्नः निर्वचनम् प्रति किंचित् लिखामः ।

"विदा ज्ञानेन, ठान् मूढान्, लाति अनुगृण्हाति, इति विठल नाम्नो निर्वचनम् कथयन्ति संस्कृतभाषापण्डिताः । 'विष्णुः' इति शब्दः रूपांतरितः, तस्य 'अल' इति प्रत्ययं संयोज्य विठ्ठलः इति भवति. स एव शब्दः 'विठलः' इति प्रयुक्तः इति केचित् वदन्ति ।

"वें पापं कटते यस्मात् पापदाहनशक्तितः ।
'वेंकटाचल' इत्येव नाम देवास्तदा जगुः ॥"

इति पौराणिकी कथा वर्तते । तथा केचन निर्वचनांतरं कथयंति ।

एतादृशानां रूढशब्दानां विवृतिः यथा कथंचित् वक्तुं शक्या, अतो न एतेषां कृते वादः सर्वानुमोदनीयः भवति ।

इदानीं 'अभङ्गः' इति शब्दस्य अर्थविचारः क्रियते । पण्ढरापुरस्था विठलमूर्तिः समपादतलस्थिता, 'न भङ्गो' वर्तते, अत एव तस्य शब्दस्य अर्थः इति निरूप्यते:-

".... The affix abhanga applied to the name of the god Vitthala refers to the bendless poss which is a rare feature and hence come to the retained with the disignation of the deity..." श्री. आर्. एस्. पंचमुखमहाशयैः, तथा अनूदितम्-

  

" .. I agree with you entirely when you say that the verse got the name Abhanga from the fact that its image is neither Dvibhanga nor tribhanga etc., but it is without any Bhanga = bend or curve i. e., it is perfectly erect. ...... " श्री. एम्. गोविन्द पै महोदयैः* : तथा अपि शब्दस्य एतस्य मुख्यतमः अर्थः न अत्र निरूपितः इति प्रतिभाति ।

कुतः । मूर्तिशिल्पशास्त्रे 'समभङ्गः, द्विभङ्गः, त्रिभङ्गः' इति कथिताः भङ्गाः । एतेषां विवृतिः च तत्र कृता । तदनुसारेण अवलोकितायां विठलमूर्त्यां 'अभङ्ग-विठलः' इति नाम न उपपन्नं दृश्यते ।

अतः अत्र शङ्कानिरसनं विद्वद्भिः कर्तव्यमिति मदीया विज्ञापना । इति वः ।

## शारदावन्दनम् [राग-भूप]

वन्देऽहं जननीं । शारदाम् ॥धृ०॥

शरच्चन्द्रवद्विलसद्वदनाम् । शुभ्रांशुकपरिवेष्टितदेहाम् ॥
चरणप्रणतनिजभक्तजनानां । शुभमतिदां वरदाम् । शारदाम् ॥१॥
श्वेतपंकजासनोपविष्टाम् । विलसन्तीं मदिरायतनयनाम् ॥
वीणापुस्तकधृकरतयुगलां । जाड्यतमोपहराम् । शारदाम् ॥२॥
स्फटिकमणिमयीं दधतीं मालाम् । कस्तूरीतिलकांकितभालाम् ॥
ब्रह्मविष्णुमहेशसंस्तुतां । मुनिजनकृतनमनाम् । शारदाम् ॥३॥
मातस्त्वत्पदयुगले निष्ठाम् । देहि, प्रपूरय वांच्छामिष्टाम् ॥
नमो नमस्तें सुर-वरश्रेष्ठां । कुंकुमवर्णपदाम् । शारदाम् ॥४॥
मोचय भवबन्धनपाशान्माम् । बालकोऽयं प्रार्थयति त्वाम् ॥
मातर्मद्विषणां पापिष्ठां । हर, वन्देऽहं त्वाम् । शारदाम् ॥५॥

---

* 1) कर्णाटक साहित्य परिषदा प्रकटिते 'हरिदास साहित्य' नाम्नः ग्रन्थस्य आंग्लभाषात्मके उपोद्घाते,

2) मुम्बई पट्टणस्य विश्वविद्यालयपत्रिकायां प्रकटितः श्री. पञ्चमुखि महोदयानां लेखः,

3) बेंगळूर पट्टणे प्रकटिते 'सुबोध' नाम्नि मासिके पत्रे च तेषां लेखः वाचकैः द्रष्टव्याः ।

 

# स्वतन्त्रभारते संस्कृतम्

[ तिरुपति संस्कृतविश्वपरिषदः सर्वोत्कृष्टं प्रवचनमत्र प्रकाश्यते संस्कृतनिमग्नायाः गुर्जरबालायाः मोहमयीस्थायाः । देवी श्री कुमारी निर्मलादेवी वेदांत-काव्यतीर्था दर्शनभूषणा, व्या. विशारदा, व्या. सरस्वती... निर्मलश्यामरस, निर्मलभावकुसुम रासोत्सव रसेश्वरी प्रभृति ग्रन्थानां लेखिका कवयित्री च ]

## मङ्गलम्

मातरं शारदां देवीं भास्वतीं भावभाविनीम् ।
वन्दे भगवतीं शुभ्रां शुद्धाऽहं शुद्धिसत्त्वदाम् ॥
संस्कृत्या संस्कृतेनैव संस्कारैश्च सुशोभितम् ।
भूयात् तत् भारतं रम्यं विश्वं भाव विलोलितम् ॥

## भाषणम्

भारततिलकायमानाः अध्यक्षमहाशयाः । भारत रत्नायमानाः अमात्यमहानुभावाः । संस्कृत-संस्कृति-संस्कार-समुपासिकाः भगिन्यः ।

त्रिपतिनगर्यधिकरणभूतलांतर्गतयत्किंचित्प्रदेशनिष्ठाधि–करणानिरूपितैतत्कालीन संयोगसम्बन्धावाच्छिन्नाधेयतावन्तः विद्वांसः ।

संस्कृतविश्वपरिषदि श्रीमतां सर्वेषां दर्शनेन आनन्द-सन्दोहसागरायमाणा भवामि ।

भगवत्यै भारत्यै भावोल्लासेन साकं पुष्पांजलिं समर्पये ।

"भाषा भाष्यतेऽनया" इति भाषा । भाषायाः प्रभावः आच्छन्नोऽस्ति देशस्य कालस्य चोपरि ।

गुर्जरस्य गुर्जरी बंगस्य बंगीया भाषाऽभिधीयते-परं च सुरभारती ह्येका चेदृशी भाषा या न कस्यचित् प्रान्तस्य कस्यचित् राष्ट्रस्य, परंच सर्वथा सर्वदा सर्वत्र सर्वेषामस्ति ।

प्रान्तीयतायाः परा गीर्वाक् । अमर भारतीर्भिन्नभिन्न प्रांतीयजनेष्वेकसूत्रतां स्थापयति ।

  

राजकीय ऐक्यार्थं हिन्दीभाषा समावश्यकी तथैव संस्कृतीनामेकीकरणार्थं सुरभारत्या: समावश्यकता ।

जीवन निसर्ग हृदयसत्वेषु, व्यक्ति समष्ठि विराट्तत्त्वेषु रसानुभव: स्यात् तदर्थमपि सुरसरस्वत्या: सद्ज्ञानं समावश्यकम्।

भारतीया: सकला: भाषा: सुरसरस्वत्यास्तनया: । तस्या ज्ञानेन अन्यासां भाषानां सुविकसितं साधीय: ज्ञानं भवितुमर्हति । सुरसरस्वत्या: भगवत्या: जनन्या: ज्ञानेन प्रेम्णा भारतीयानामन्यभाषापुत्रीणां मधुरं क्रीडनमपि मातुरङ्के स्यात् ।

स्वयं सुशोभिताऽपि सुरभारती षोडशभाषाभूषाभि: सुशोभनीया। शोभां यास्यन्ति चेतरा भाषा भूषा: सुरभारत्या देव कन्यया सह विनियोगेन ।

आंग्ल, फ्रेंच, इराणि, रशियन् भाषा सखीनामपि सदुपयोग: सुरसरस्वत्या: प्रचारे स्यादिति :

पूर्वयूरोपे बहव: संस्कृतविद्यालया: सन्ति प्राकृतभाषाया: बौद्धधर्माणां च स्थानानि विशेषत: वर्तन्ते ।

पाली अर्धमागधी सखीयुगलमस्ति सुरसरस्वत्या: । यत्र संस्कृतविद्यालयास्तत्र पाली सखीरूपेण संचरेत् ।

अर्धमागधी अर्धहृदया भगिनीवत् विहरेदिति भावना ।

**तादृश्या: सर्वभाषाजनन्या: सर्वतोमुखप्रसाराय काश्चन उपयुक्ता: सूचना निर्मलमनसा मया क्रियन्ते**

१ तदर्थमपि संस्कृतव्याकरणं विरलं तरलं सरलं च करणीयं ।

२ सुज्ञेया: शब्दा: व्यवहार्या: ।

३ सन्धिविरहितं लेखनं लेख्यम् ।

४ भूतकालस्यैकमेवरूपं व्यवहार्यम् । जगाम अजीगमदित्यादि रूपाणां प्रयोग: वर्जनीय एव ।

५ संस्कृतसाहित्याय भारतीय राज्यतन्त्रात् वास्तविकं सक्रियं प्रोत्साहनं प्रदेयम् ।

६ संस्कृतपाठशालाभ्योऽपि राज्यसाहाय्यं संयोजनीयम् ।

७ संस्कृतविदुषां वेतनेऽपि संवर्धनं स्यात् ।

८ संस्कृतपरीक्षाणां स्थानं विश्वविद्यालयकक्षायां लेख्यम् ।

९ शालासु हिन्दीभाषायै चांगलभाषायै यत् स्थानं दीयते तदेव स्थानममरभारत्यै अपि प्रदेयमेव ।

१० यथा नाट्यनृत्याणां प्रतिस्पर्धाः समारम्भाः प्रयोज्यन्ते तथैव दैव वाक्, व्याख्यान, लेखन, काव्यानामपि प्रति-स्पर्धा समारम्भाः सम्भावनीयाः :

११ नाटकानां सरलशैल्यां वैदर्भीयशैल्यां च लेखनं स्यात् ।

१२ संस्कृतलेखकेभ्योऽपि गरीयः प्रोत्साहनं प्रदेयम् ।

१३ शिक्षणक्रमे संस्कृतमनिवार्यं निविष्टं स्यात् ।

१४ राजकीय, सामाजिक, सांस्कृतिकविषयाः युगधर्मानुसारिणः लेख्याः ।

१२ परिषत्सु स्त्रीणां स्थानमवश्यं भावपूर्णं भाव्यम् । यावत् पर्यन्तं स्त्रीणां स्थानं परिषत्सु न स्यात् तावत् पर्यन्तमपूर्णैव परिषद् ।

१६ संस्कृतपरिषत्सु संस्कृते समुद्घाटनं धन्यवादादिः विधिः समाप्तिश्च सर्वं संस्कृते हि भाव्यम् ।

१७ संस्कृतभाषायाः महिम्नः समाजस्य बोधार्थं हृदयंगमं लेखन-साहित्यं प्रकटीकरणीयम् ।

दक्षिणभारते तिरुपतिपुण्यभूमौ मिलितायाः संस्कृतविश्व-परिषदः अध्यक्षमहाशयेभ्यः तथा समागतेभ्यः सर्वप्रांतीयविद्व-द्भ्यः वन्दनीयेभ्यः अभिवन्दनानि मामकीयानि ।

  

# श्रीकृष्णसाक्षात्कारः

"यमेवैष वृणुते तेन लभ्यः"

मङ्गळमयः प्रभातसमयः । तस्मिंश्च ब्राह्मे मुहूर्ते पूर्वं कदाचित् उडिपि क्षेत्राद् अनतिदूरवर्तिनः समुद्रस्य तीरे कश्चन यतिः परं ज्योतिः ध्यायन् उपविष्टः आसीत् । स्नानार्थं आगताः परस्सहस्रा एव जनाः तेजःपुंजायमानं तं योगीश्वरं दृष्ट्वा परस्परम्–

"कनकातुलतालसन्निभः कमलाक्षो विमलेन्दुसन्मुखः ।
द्विजराजगतिर्महाभुजो विलसन् कोऽयमपूर्वपूरुषः ॥".

इति साश्चर्यं पृच्छन्ति स्म च दूरादेव । तस्य च ब्रह्मर्षेः तेजः प्रकर्षेण धर्षिताः नास्तिका अपि, धीवराः अपि स्नानार्थं मणिमुक्तादिशोधार्थं, शंखशुक्तिकादिसंग्रहार्थं च समागताः विजातीयाः व्यापारिणोऽपि स्वस्वकार्याणि विस्मृत्य तस्य योगिराजस्य ज्योतिर्मण्डलमिव देदीप्यमानं मुग्धं मुखमण्डलं एव अनिमिषनेत्रेण निरीक्षमाणाः स्थिताः । ततः स सर्वोऽपि जनसम्मर्दः तं द्वैतमतस्थापकं मध्वाचार्यनामानं यतीश्वरम् ।

"भयभक्तिभरानताकृतिः विरचय्याञ्जलिबन्धमञ्जसा ।
क्षणनामुकुलीकृतेक्षणः स गुरुं केवलमभ्यवन्दत ॥"

अत्रान्तरे सुदूरात् समुद्रमध्याद् अश्रूयत कोऽपि चीत्कारः । तत्र च आक्रुश्यतां परःशतानां स्त्रीबालवृद्धानां करुणाक्रन्दनं तस्य

---

'रसो वै सः' परतत्त्वं आबालसर्वेषु विरसतायां प्राप्तायां रसायां रसधारां सिंचतु । जगल्लीलानाटकसूत्रधारस्य रामस्य चरणयोः सर्वेषां समयं जीवनं याचयित्वा भगवत्याः सुरसरस्वत्याः मातुः पदपद्मयोः संस्कृतस्य संस्कृतेः संस्काराणां समुन्नतिं संप्रार्थ्य विरम्यते ।

प्रशांतप्रभा तस्य मौनभङ्गं अकरोत् । तेन च हृदयद्रावकेण आक्रोशेन आकर्षिताः सर्वेऽपि तीरगता जनाः सुदूरं समुद्रमध्ये दृष्टिक्षेपं अकुर्वन् । तत्रत्यं भीकरं दृश्यं हृदयानि विदारयति स्म। समुद्रमध्ये अकस्मात् निमज्जनोन्मुखीं महतीं एकां नौकां महता प्रयत्नेनापि रक्षितुं नापारयन् नौचालकाः । सा तु शतावधिकजनैः पूर्णा, धनधान्यादिनानापदार्थसार्थभरिता महती नौः तस्मिन् अगाधे सागराम्भसि वेगाद् अधः ब्रुडति स्म । तदा नाविकाः प्रयाणिकाश्च सममेव प्राणसङ्कटात् हाहाकारान् चीत्कारांश्च कर्तुं आरेभिरे । तं ध्वनिं विलापं च शृण्वन्तोऽपि तीरगताः परःस्सहस्रा अपि जनाः किमपि कर्तुं अशक्नुवानाः 'हा हन्त' इति वदन्तः तूष्णीं तस्याः महानौकायाः जलसमाधिं दूरात् निरीक्षमाणाः अवतस्थिरे । " स्वयमनवतीर्णः कःपरान् तारयिष्येत् " ।

इतश्च महत्येव च प्रत्यूषे समुद्रमागत्य स्नात्वा तत्रैव सागरतीरे सैकतवेदिकायां उपविश्य प्रातरान्हिकं जपतपोनुष्ठानादिकं परिसमाप्य तदैव नयनदलम् उन्मीलयामासुः परमहंसाः योगीश्वराः । तदा दूरादेव जलप्रलयमेव उपगच्छन्ती नौः यतीश्वराणां लोचनगोचरतां अगात् । मुमूर्षूणां च जनानां रोदसी अपि रोदयन् रोदनध्वनिः तेषां सन्यासिनां कर्णपथं उपागच्छत्। मृत्युमुखे एव प्रविविक्षूणां तेषां जनानां दयनीयां दुर्दशां निरीक्ष्य योगिराजानां हृदयसागरः उल्लोलकल्लोल एव अभवत् ।

तदा ते स्वयं उत्थाय तीरे जानुदघ्ने नीरे स्थित्वा स्वकीयां शाटीम् उध्दूनयामासुः ।

तत्क्षणे महानेव चमत्कारः तत्र समभवत् । तस्याश्च स्फुटितजीर्णशाट्याः वेगादुध्दूननेन समुत्पन्नः वायुः तां मज्जन्तीमपि नौकां सुरक्षितं तीरम् उपानयत् । नोकास्थितः न कोऽपि

  

जीवजन्तुः जलतलं अस्पृशत् । नैकोऽपि च पदार्थः त्रुडितः । तदा तीरमागताः सर्वेऽपि जनाः स्वप्राणदानकारिणं तं पुण्यपुरुषं सहस्रशः प्रणेमुः प्रार्थयामासुः प्रशसंसुः पूजयामासुः प्रीणयामासुश्च । तेषां च आशीर्वादं अधिगत्य स्वस्वग्रामधामाभिमुखं गताः ।

नौकाधिपतिस्तु कृतज्ञताबुद्ध्या धनधान्यमणिमुक्ताफलादिपरिपूरितां समग्रनौकामेव गुरोः पादान्तिके समर्प्य 'इदं न मम'। स्वीक्रियतां सर्वमपि श्रीमद्भिरेव" इति विज्ञाप्य बद्धाञ्जलिपुटः दूरादतिष्ठत् । तदा निस्पृहशिखामणयः ते आचार्यवर्याः तं प्रति "तदेतत्सकलं तवैव अस्तु । नास्माकं सन्यासिनां तैः पदार्थैः किमपि कृत्यम्" इत्यूचुः ।

सः नाविकः 'श्रीमद्भिः' नौकागतं यत्किमपि वा स्वीकरणीयमेव। द्वारकादिक्षेत्रेभ्यः अनेक एव अपूर्वपदार्था मया आनीताः। तेषु कांश्चनापि गृहीत्वा अनुग्राह्योऽयं जनः" इति अत्याग्रहेण पुनःपुनः प्रार्थयत । तदा श्रीमदाचार्यः तम् अनुजिघृक्षुः तन्नौकायाः गोपीचन्दनमृत्खण्डमेकमुध्दृत्य शिष्येभ्यः स्वमठं प्रति नेतुम् आदिशत् । परं तेषु न कोऽपि तां मृत्स्नामुद्धर्तुं समर्थः बभूव । तदा स्वयं स एव योगिराजः तं मृत्तिकाखण्डं स्व शिरसि निधाय मठाभिमुखं प्राचलत् ।

तदा आनन्दोद्रेकेण सः भगवन्तं गातुमुपचक्रमे । स्वयंस्फूर्त्या छन्दोमयी एव वाणी तस्य भक्तिभरोद्रेकपुलकितसर्वाङ्गस्य मुखात् सुन्दरकाव्यरूपेण मन्दाकिनीव मकरन्दधारेव निष्यन्दति स्म । तस्य हृदये चिरादुद्रिच्यमाना भगवद्विषयिणी निरतिशया भक्तिरेव तदा अभिव्यक्ति आपेदे ललितपदपुञ्जात्मना गीतिरूपेण च । एवं परमानन्दोद्रेकेण भक्तिपारवश्येन च

गच्छतः गायतः नृत्यतः वर्णयतः परमात्मानं च प्रीणयतः रस-भावपरतन्त्रस्य श्रीमदाचार्यस्य तदा सद्यः समुत्स्फूर्तं भावगीत-मेव अद्यापि द्वादशस्तोत्रमिति सुप्रसिद्धं वरीवर्ति ।

द्वादशाध्यायात्मके अस्मिन् लघुनि रसवति च खण्डकाव्ये आचार्यैः मधुरैः मधुराक्षरैः असकृदेव आपादमौलिपर्यन्तं श्री कृष्णस्य स्वरूपं सरससुन्दरमुपवर्णितम् । भगवतः केशवनारा-यणमाधवादिरूपाणि, मत्स्यकूर्मादिदशावताराः, ज्ञानानन्दादि-स्वरूपं, गुणपूर्णत्वं, अघटितघटनासामर्थ्यं, सर्वदेवदेवोत्तमत्वं च सरलैरपि अर्थपूर्णैः, ललितैः अपि भावभरितैःशब्दैः प्रत्यपादि-सर्वज्ञाचार्यैः कवीश्वरैः । हरेः सर्वोत्तमत्वविषये च श्रीमदाचा-र्याणां महीयानेव आत्मविश्वासः । अस्मिन् विषये च तैः शपथ-पूर्वकमेव एवमाघुष्यते अस्मिन् काव्यखण्डे—

"श्रुणुतामलसत्यवचः परमं शपथेरितमुच्छ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥" इति

एवमानन्देन गायन् उडिपीमागत्य तत्र सरोवरे तन्मृत्ति-काखण्डं यदा न्यक्षिपत् तदैव तत्र एव बालगोपालकृष्णमूर्तिः स्पष्टं समदृश्यत । तां च श्रीकृष्णस्य प्रतिमां सम्यक् तस्मिन्नेव मध्वसरोवरवारिणि सुस्वच्छं प्रक्षाल्य तत्र प्रतिष्ठापयामास । तस्य च श्रीकृष्णस्य पूजा अव्याहतं आचन्द्रतारकं च प्रचलेदिति दूरदृष्ट्या विचार्य कृष्णपूजार्थं स्वशिष्यान् अष्टसन्यासिनः नियोजयामास । ते च अष्टपीठाधीश्वराः वैष्णवमतस्य आधार-स्तम्भायमाना अष्टदिग्गजा इव द्वैवार्षिकपर्यायेण श्रीकृष्णं पूज-यंति, श्रीकृष्णस्य मतं च सर्वत्र प्रसारयन्ति अद्यापि । तेषां अन्यदा पूजार्थं इतरप्रतिमा अपि आचार्यैः दत्ताः । ताः अद्यापि तत्त-न्मठेषु विद्योतन्ते ।

  

श्रीमदाचार्यैः श्रीकृष्णस्य पूजार्थं नियुक्ताः अष्टयतयः–

| | नामानि | मठाः | आचार्यदत्तप्रतिमाः |
|---|---|---|---|
| १ | श्री विष्णुतीर्थाः | स्वादीमठः | भूवराहः |
| २ | श्री रामतीर्थाः | शिरूरमठः | विठलः |
| ३ | श्री हृषीकेशतीर्थाः | पलिमारुमठः | श्रीरामः |
| ४ | श्री वामनतीर्थाः | काणूरमठः | नरसिंहः |
| ५ | श्री अधोक्षजतीर्थाः | पेजावरमठः | विट्ठलः |
| ६ | श्री नरसिंहतीर्थाः | अधमारुमठः | कालियमर्दनकृष्णः |
| ७ | श्री जनार्दनतीर्थाः | कृष्णापूरमठः | ,, |
| ८ | श्री उपेन्द्रतीर्थाः | पुत्तिगेमठः | विट्ठलः |

इदं च श्रीमदानन्दतीर्थैः प्रतिष्ठापितबालगोपालाधिष्ठितं उडिपीति सुप्रसिद्धं श्रीकृष्णक्षेत्रं भगवद्भक्तानां परमपवित्रतमं पुण्यस्थलम् । इदानीं च श्री श्री १०८ परमहंसपरिव्राजकाचार्या श्रीमदधमारुमठाधीशस्वामिपादाः पर्यायपीठम् अधिरुह्य श्रीकृष्ण-पूजां कुर्वंति । परमोदाराणां एतेषां पर्याये सकृदपि वा उडिपीक्षेत्रं संदृश्य कृतार्थीभवन्तु 'मुहरहोरसिका भुवि भावुकाः' ।

---

## माध्वसम्प्रदायः

लेः– वै वा. श्रीमन्माध्वसम्प्रदायाचार्य, दार्शनिकसार्वभौम, साहित्यदर्शनाद्याचार्य, तर्करत्न, न्यायरत्न, गोस्वामी **श्री दामोदरजीशास्त्री, काशी**

विश्वस्मिन्नेव जगति चेतनाचेतनात्मकपदार्थद्वंद्वं वरीवर्ति । अचेतनपदार्थमधिकृत्य सर्वंकषां मीमांसां समाकलयत् आधि-भौतिकं शास्त्रं 'विज्ञानमिति' कथ्यते । चेतनसंबन्धिविचारान् कूलङ्कषं विविच्य सिद्धांतं संस्थापद् आध्यात्मिकज्ञानमेव 'दर्श-नम्' इति कथ्यते । ईदृशेषु अतींद्रिय आत्मादिवस्तुसंशोधनार्थं चिकित्सात्मकदृष्ट्या प्रवृत्तेषु दर्शनशास्त्रेष्वपि वैदिकं अवैदिकं चेति विभागः क्रियते । तत्रापि प्रत्येकं पुनः ईश्वरवादि अनीश्वर-

 

वादीति द्वेधा विभज्यते । एवं चेतनसम्बन्धिषु वेदांतदर्शनेष्वपि चत्वारः प्रकाराः परिदृश्यन्ते ।

एषु च दर्शनेषु अन्यतमं सेश्वरवैदिकदर्शनम् । तत्रापि 'उत्तरमीमांसा' शब्देन व्यपदिश्यमानं वेदांतदर्शनमेव ब्रह्मस्वरूपनिर्णायकत्वात् सर्वप्रधानं सर्वोत्तमं च । तत्रापि पुनः निर्विशेषब्रह्मवादः सविशेषब्रह्मवादः इति द्वौ प्रकारौ । निर्विशेषब्रह्मवादः 'अद्वैतवाद' नाम्ना प्रथित एव अस्ति । सविशेषब्रह्मवादश्च विष्णुपरः, शिवपरः, शक्तिपरः, सूर्यपरः, गणपतिपरश्चेति पञ्चविधो दृश्यते । एष्वपि प्रत्येकं पुनः अनेके अवान्तरभेदाः संदृश्यंते । तत्र प्राथमिके सविशेषब्रह्मवादे विशिष्टाद्वैतवादः, शुद्धाद्वैतवादः द्वैतवादश्चेति चतुर्विधा ब्रह्मवादाः श्रूयन्ते ।

तत्र च तुरीयस्य द्वैतवादस्य सर्वप्रथमं आद्योपदेष्टा नाम साक्षात् चतुर्मुखब्रह्मदेव एव । तमेव च द्वैतसंप्रदायं कलिकाले दुर्भाष्यप्रवर्तितान्यथाज्ञानखिलीभूतं अवलोक्य भाविब्रह्मा वायुः पूर्णब्रह्मणः आज्ञानुसारेण मध्वाचार्यनाम्ना अवतीर्य उददीधरत् । अत एव एते आनन्दतीर्थापरनामधेयाः सर्वज्ञाचार्या 'द्वैतसिद्धांतप्रतिष्ठापनाचार्या' इति बिरुदभूषणेन आद्रियन्ते पूज्यन्ते च । अयमेव दार्शनिकविभागेषु 'माध्वसंप्रदाय' इति व्यपदिश्यते ।

अयं च माध्वसंप्रदायः केवलं दक्षिणदेशे एव प्रसृत इति बहूनां कल्पना । परन्तु वस्तुस्थित्यां विचार्यमाणायां दक्षिण इव उत्तरदेशेऽपि 'माध्वसंप्रदायस्य' भूयान् प्रचारः सार्वत्रिकश्च प्रसारः चिरादेव संजातः वर्तते । अस्य च अनादिसिद्धस्य अन्तेसिद्धत्वात् सर्ववेदांतशास्त्राणामेव सिद्धांतभूतस्य विश्वमान्यस्य 'माध्वसंप्रदायस्य' प्रवर्तकाः अनेका एव परमपवित्राः आचार्यपीठाः आर्यावर्ते तत्र तत्र विराजन्ते । प्रत्येकस्यापि पीठाधीशस्य

लक्षाधिका एव शिष्यप्रशिष्या माध्वसंप्रदायमेव स्वरूपोद्धारकं मुक्तिसाधनं मन्यमाना वैष्णवीमेव माध्वसंमतां उपासनापद्धतिं नित्यमनुतिष्ठन्तः संदृश्यन्ते । एतल्लेखलेखका वयमपि श्रीमदानन्दतीर्थाणां प्रियशिष्यपीठं आरुह्य आचार्यमतस्य प्रसारार्थमेव प्रयतामहे । अस्मत्पीठाधीश्वराणां सत्स्वपि अनेकेषु बिरुदभूषणेषु तत्र सर्वोत्तमं 'श्रीमन्माध्वसंप्रदायाचार्याः' इति बिरुदमेव साभिमानं सगौरवं सश्रद्धं सुवर्णाक्षरैः विलिखितं सर्वप्रथमं ध्रियते ।

अस्मिश्च शुद्धवैदिकसंप्रदाये श्रीमदाचार्येभ्यः प्राक् पश्चाच्च ऋषिभिः पण्डितैः आचार्यैश्च विष्णुसर्वोत्तमत्व-तारतम्य-जगत्सत्यत्व-पारमार्थिकभेद-प्रमाणप्रमेय–उपासनादिविषयान् च अधिकृत्य लिखितः ग्रन्थराशिः अनुष्टुप्छन्दःपरिमाणेन यदि मीयेत तदा दशलक्षतः कदाचिदपि न्यूनः नैव भवति । अस्य माध्वमतस्य तत्वानि पूर्वाचार्यैः एकस्मिन् श्लोके संगृहीतानि । पठ्यतां स श्लोकः–

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत् तत्वतो
भिन्ना जीवगणा हरेरनुचराः नीचोच्चभावं गताः ॥
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

उत्तरदेशे सर्वत्र द्वैतवादं प्रसार्य वैष्णवीयं भक्तिमार्गमेव पुरस्कुर्वन्तः श्री बलदेवविद्याभूषणमहोदयाः 'गोविंदभाष्य, प्रमेयरत्नावलि, वेदांतस्यमन्तक, गीताभाष्य, दशोपनिषद्भाष्य, विष्णुसहस्रनामभाष्य, सिद्धांतरत्ने'त्यादि नानाग्रन्थान् प्रणिन्युः। प्रायः सर्वेऽपि ते ग्रन्थाः श्रीचैतन्यादारभ्य अद्ययावत् सर्वेषामपि विष्णूपासकानां परमसंमताः प्रमाणभूताश्च वर्तन्ते । एतेषु सर्वेषु ग्रन्थेषु प्रतिपादितः अर्थः तत्वानि च साररूपेण तेनापि आचार्यबलदेवविद्याभूषणेन स्वप्रमेयरत्नावलीग्रंथे क्रोडीकृत्य निरूपितानि

मतस्थापकाचार्याः—

# श्रीमन्मध्वाचार्याः

परमपवित्रेषु परशुरामक्षेत्रेषु 'उडुपी' अतीव श्रेष्ठं पुण्यस्थलम्। तत्र च अनन्तेश्वरदेवस्थानं पुरातनकालादेव सुप्रसिद्धं। पूर्वं कदाचित् तत्र महान् उत्सवः प्रवृत्त आसीत्। तत्र संमिलिते महाजनमेलापके अन्यतमः अत्युच्चतमं स्तम्भमेकं आरुह्य नृत्यति स्म। यात्रार्थं आगताः सर्वेऽपि जनाः तस्य पुरुषस्य तुङ्गस्तंभारोहणं तदग्रे च रङ्गमण्टप इव स्वच्छंदनाट्यं च दृष्ट्वा आश्चर्यचकिताः बभूवुः। स च नटशेखरः तदा बाहू उध्दृत्य शपथपूर्वकं जनान् उद्दिश्य सुस्पष्टमाघोषयामास—

"उत्पत्स्यते जगति विश्वजनीनवृत्तिः विश्वज्ञ एव भगवान् अचिरादिहेति"

तस्य वचनानुसारेण एव पाजकक्षेत्रे शालिवाहनशकस्य ११६० विलम्बिसंवत्सरे विजयदशमी सुमुहूर्ते (1238 A.D.) मध्यगेहभट्टनाम्नः पण्डितस्य गृहे सर्वज्ञशिखामणीनां मध्वाचार्याणां जन्म अभवत्। एते च मध्वाचार्याः साक्षाद् वायोः तृतीयावतारः इति तु बळित्थादिवैदिकसूक्तेषु सुस्पष्टं प्रतिपादितमेव वर्तते।

मध्यगेहभट्टः तस्य बालकस्य वासुदेव इति नाम अकरोत्। तस्य नैकाः बाललीलाः तत्शिशोः जीवोत्तमत्वं पवनावतारत्वं

---

स चायं दाक्षिणात्येषु माध्वेषु प्रचलितपूर्वोक्तश्लोकस्यैव प्रतिच्छायेव दृश्यते—

"श्रीमध्वः प्राह विष्णुं परतममखिलाम्नायवेद्यं च विष्णुम
सत्यं भेदं च जीवान् हरिचरणजुषः तारतम्यं च तेषाम् ॥
मोक्षं विष्ण्वंघ्रिलाभं तदमलभजनं तस्य हेतुं प्रमाणम
प्रत्यक्षादित्रयं चेत्युपदिशति हरिः कृष्णचैतन्यचन्द्रः ॥"

एतेन श्रीमाध्वसंप्रदाय एव श्रीचैतन्यप्रभुणा इतरैः औत्तरेयैः वैष्णवैश्च अनसृत इति सिध्यति।

ख्यापयन्ति स्म ।

एकदा कुलस्वामिनः अनन्तेश्वरस्य दर्शनं गृहीत्वा मध्यगेहभट्टस्य गृहस्थमण्डली स्वगृहं प्रत्यागच्छति स्म । तदा रात्रिसमये मध्येमार्गं महारण्ये कश्चन ब्रह्मराक्षसः तत्परिवारजनं हन्तुम् अभ्यधावत् । परन्तु तत्र वासुदेवं दृष्ट्वैव 'लोकेश्वरः स बत बालतमः किलेति' व्याहृत्य ततः पलायत ।

मध्यगेहभट्टः अतीव दरिद्रब्राह्मणः । एकस्मिन् दिने कश्चन ऋणदाता मम धनम् अद्य प्रदेयमेवेति आग्रहेण गृह एव उपाविशत् । तदा भट्टः किंकर्तव्यमूढः देवगृहे चिंताक्रांत उपाविशत् । तदा तत्रैव गृहस्य अङ्गणे खेलन् वासुदेवः लीलाकरेण स करेण सुकोमलेन बीजांतराणि किल कानिचिदाशु तस्मै धनिकाय प्रायच्छत् । सोऽपि तानि बहुमानपूर्वकं स्वीचकार । कालान्तरे भट्टः ऋणं प्रदातुं यदा तस्य श्रीलस्य गृहं अगच्छत् तदा सः श्रीलः "तव सुतेन तस्मिन्नेव दिने मम ऋणं प्रत्यर्पितमित्याह" तदा भट्टः "मम बालः केवलं बालिशतया कानिचन बीजान्येव प्रायच्छत् । तेन कथं ऋणं प्रत्यर्पितं भवेत् !" इति अपृच्छत् । तदा सः धनिकः भक्तिगद्गदकंठः प्राह—"पुण्यात्मन् तव पुत्रात् अहं केवलं शुष्काणि बीजान्येव नाविन्दम् किन्तु 'बीजच्छलेन पुरुषार्थमहो विशिष्टं' इति ।

बाल्ये कन्दुकादिखेलनावसरेपि वासुदेवस्य मुखात् स्वयं स्फूर्त्या भगवत्स्तोत्रपराणि पद्यानि एव स्वयं निस्सरन्ति स्म । तत्रेदं पद्यद्वयमद्य उपलभ्यमानं वाचकजनावगाहनाय अधो दीयते—

"अम्बरगङ्गाचुम्बितपादः पदतलविदलितगुरुतरशकटः ।
कालियनागक्ष्वेलनिहन्ता सरसिजनवदलविकसितनयनः ॥
कालघनालीकर्बुरकायः शरशतशकलितसुररिपुनिवहः ।
सन्ततमस्मान् पातु मुरारिः सततगसमजवखगपतिनिरतः ॥"

एवं यदा वासुदेवः दशवर्षदेशीयः समभवत् तदा श्री अच्युतप्रेक्षाचार्यनाम्नां यतींद्राणां सकाशात् सन्यासं स्वीचकार। एवं 'वेदांतविद्यानिजराज्यपालने सङ्कल्प्यमानो गुरुणा गरीयसा' असौ वासुदेवः पूर्णप्रज्ञ इति आनन्दतीर्थ इति च नाम लेभे।

"आनन्दरूपस्य परस्य पात्रधीः आनन्दमन्दायि सुशास्त्रकृत् स यत्।
आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूपरूपकम ॥"

आनन्दतीर्थाणां आश्रमग्रहणसमनन्तरमेव तैः सह वाक्यार्थं कर्तुं न्यायपटीयांसः केचिद् विद्वांसः समागताः। तदा आचार्यैः 'नानुमा कामचारिणी' 'प्रत्यक्ष श्रुत्याद्यननुगृहीतायाः केवल अनुमाया अर्थसाधकत्वमेव नास्तीति' सयुक्तिकं प्रत्यपादि। तदा पराजितैः तैः पण्डितैरेव आचार्याणां तर्कपांडित्यमन्वीक्ष्य 'अनुमानतीर्था' इति बहुमानपदेन आहूता आदृताश्च आचार्याः।

"विजित्य विश्वान् विदुषः सभास्वसौ जगाम नाम्नाप्यनुमानतीर्थताम ॥"

ततः वादिसिंहः बुद्धिसागरश्चेति द्वौ बौद्धपण्डितौ सर्वपण्डितान् विजित्य प्रतिपक्षिणः शोधयन्तौ अनुमानतीर्थाणां कीर्तिं ख्यातिं च श्रुत्वा तत्र आगतौ। प्रवृत्ते शास्त्रसंपाते 'समस्तवादींद्रगजप्रभञ्जः चरन्नवन्यां प्रतिपक्षिकांक्षया। वेदद्विषां यः प्रथमः समाययौ स वादिसिंहः अष्टादशविकल्पान् कृत्वा वैदिकमतं खण्डयामास। तस्य च प्रचण्डं पाण्डित्यं दृष्ट्वा जनाः सभिकाः आनन्दतीर्थाणां विजयविषये संशयिता एव आसन्। परं पूर्णप्रज्ञः 'स वादिसिंहस्य गिरं गरीयसीम् अखंडयन् पंडितमण्डलान्तरे'। वादिसिंहोक्ताः 'विकल्पकोटीरथ खण्डयन् द्रुतं रेजेऽधिकं स्मेरमुखो बृहन्मतिः'। तथा अगस्त्य इव सागरं बुद्धिसागरनामानं बुधमपि पराजिगाय। तौ उभावपि महानिशीथ एव मानरक्षणार्थं पलायितौ। एवं सर्वेषामपि वादिनां निग्रहः कृतः पूर्णप्रज्ञैः।

एवं स्वकृतं दिग्विजयं देवेऽर्पयितुं ततः तत्र ४८ दिनपर्यन्तं काष्ठमौनमुपवासं च कृत्वा अत्युग्रतरं तपः अनुष्ठितमाचार्यैः केवलं भगवत्प्रीत्यर्थमेव। तत्तपसा सन्तुष्टाः वेदव्यासमहर्षयः स्वप्ने समागत्य मानवदुर्गमं स्वावासभूतं अन्यद् सुदूरबदरिकाश्रममागन्तुम् आदिशन्। तं च भगवतो बादरायणस्य स्वाप्नसन्देशं अनुविन्द्य सानन्दम् उदचलद् आनन्दतीर्थः व्यासाश्रमं प्रति। हैमाचलकाननपंक्तिषु दुर्गमशिलाशिलोच्चयविषयेषु अपि सलीलं सोत्साहं च तस्य गमनं साक्षात्कृतवान् सत्यतीर्थनामा प्रत्यक्षदर्शी शिष्ययतिः एवमुपवर्णयति—

"वानरेन्द्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः।
उल्ललास गिरिपुङ्गवश्रृङ्ग स व्रजन् वृजिननाशननामा॥"

एवमुत्तुङ्गगिरिशृङ्गाणि विहङ्ग इव प्लवङ्ग समुल्लंघ्य—

"अथ हैमवते तटान्तरे बदरीषण्डविशेषमण्डितम्।
परमाश्रममाश्रयं श्रियः सकलज्ञः स ददर्श विश्रुतम्॥
सुमनोनिकरेण परितं स्वमनोऽभीष्टदमल्पदुर्गमम्।
अपरस्परमत्सरप्रजं ननु वैकुण्ठमिवाच्युतालयम्॥"

तत्र च गत्वा बादरायणं नादिरायणं (नारायणं) च नत्वा उपदेशं अध्यगच्छत्। तथा सूत्रभाष्यं विधातुम् आदेशमपि अध्यगच्छत्। तदादेशानुसारेणैव स्वपूर्वतनानां एकविंशतिब्रह्मसूत्रभाष्याणां खण्डनपूर्वकं विष्णुसर्वोत्तमत्वप्रतिपादकं भाष्यग्रन्थं व्यरीरचद् आचार्यवर्यः। तस्य च आनन्दतीर्थीयभाष्यस्य स्वरूपमेवं उपवर्णितं पंडिताचार्यैः—

"बालमङ्गमपि बोधयद् भृशं दुर्निरूपवचनं च पण्डितैः।
अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम्।
माननीयमपि नाकिनायकैरुपमन्यदिव भन्यमात्मनः॥" इति।

ततः प्रत्यागमनसमये शोभनभट्ट, शामाशास्त्रीति च द्वौ कलिंगदेशीयौ पण्डितकुलशेखरमणी पराजितौ भूत्वा तत्शिष्यत्वं

स्वीकृत्य सन्यासदीक्षामेव अङ्गीचक्रतुः । एतौ एव च आचार्यवर्यौ पद्मनाभतीर्थ, नरहरितीर्थनामानौ आचार्याणां पश्चात् तत्पीठमलंचक्रतुः ।

एवं द्वित्रवारं आसेतुशीताचलं संचार्य वादिनिग्रहं विधाय अनेकांश्च ग्रन्थान् निर्माय भाविसमीरणाः एते भाविजनाङ्गमेव उपकृतवन्तः । तेषां ग्रन्थविस्तरस्तु एवं क्रोडीकर्तुं शक्यते ।

(१) गीताप्रस्थाने

गीताभाष्यं गीतातात्पर्यं च ।

(२) सूत्रप्रस्थाने

१ ब्रह्मसूत्रभाष्यम्, २ अनुव्याख्यानम्, ३ न्यायविवरणम्, ४ अणुभाष्यम् ।

(३) उपनिषत्प्रस्थाने

ईश–केन–कठ–प्रश्न–मुण्डक-तलवकार-तैत्तरेय-ऐत्तरेय–छांदोग्य–बृहदारण्येति दशोपनिषदां भाष्याणि ।

(४) ऋक्प्रस्थाने

ऋग्भाष्यम् (ऋग्वेदस्य प्राथमिकानां चत्वारिंशतः ऋचां परममुख्यवृत्त्या परमात्मा एव प्रतिपाद्यः इति स्थालीपुलाकन्यायेन प्रदर्श्य 'सर्वेषामपि वेदमन्त्राणां एवमेव भगवत्पर एवार्थः कार्यः इति वेदार्थनिर्णयनप्रथमदर्शनं दिग्दर्शनरूपेण विहितम् ।

(५) पौराणिकसाहित्ये

१ महाभारततात्पर्यनिर्णयः, २ भागवततात्पर्यम्, ३ यमकभारतम् ।

(६) स्वतन्त्रग्रन्थाः

१ प्रमाणलक्षणम्, २ कथालक्षणम्, ३ मायावादखण्डनम्, ४ मिथ्यात्वानुमानखण्डनम्, ५ उपाधिखण्डनम्, ६ तत्वसंख्यानम्, ७ तत्वविवेकः, ८ तत्वोद्योतः, ९ तत्वनिर्णयः, १० कर्मनिर्णयः ।

# " उडुपीक्षेत्रे पर्यायमहोत्सवः "

" विशालाभ्याम आभ्यां किमिह नयनाभ्यां फलमिह ।
न याभ्यां दृष्टोऽभूदुडुपिपुरि पर्यायसुमहः ॥ "

श्रीमन्मध्वाचार्याणां भक्त्या सुप्रसन्नः गोपालकृष्णः उडुपीक्षेत्रं अलङ्करोति । तस्या निजोपास्यदेवतायाः बालगोपालमूर्तेः पूजां स्वयं मध्वाचार्या एव अद्यापि अनुतिष्ठन्ति । यतः मध्वप्रतिष्ठापितः स बालमुकुन्दः मध्वादन्यस्य पूजां नैव गृण्हात्येव । यतः 'यमेवेष वृणुते तेन लभ्यः' 'तस्यैष आत्मा वृणुते तनूं स्वाम्' इति वचनाद् । अस्य कठोपनिषद्वाक्यस्यैव आशयः 'विष्णुतत्वनिर्णयटीकायाम्' "एष परमात्मा यं वृणुते यस्य प्रसीदति तेनैव लभ्यः । कथं ? यतः तस्य स्वां तनुं विवृणुते प्रकाशयति " इत्यादिना स्पष्टीकृतः । तदनुसारेणअत्रापि 'एष कृष्णपरमात्मा यस्य प्रसीदति ? मध्वाचार्यस्य प्रसीदति । अत एव तस्य 'विवृणुते तनूं स्वां' (बालगोपालरूपां) तस्मात्सः बालगोपालकृष्णः तेनैव मध्वाचार्येणैव लभ्यः पूजार्थं नान्येन केनापि इतीदं वेदवाग्व्यवस्थापितं तत्वम् ।

अयं च पर्यायमहोत्सवो नाम श्रीकृष्णपूजार्थं श्रीमध्वाचार्याणां विद्यमानेषु विशिष्टयतिषु पर्यायक्रमेण विशेषसन्निधान-

---

(७) आगमशास्त्रादिषु

१ तन्त्रसारः, २ जयन्तीनिर्णयः, ३ यतिप्रणवकल्पः, ४ कृष्णामृतमहार्णवः, ५ सदाचारस्मृतिः ।

(८) स्तोत्राणि

द्वादशस्तोत्रं नखस्तुतिश्चेति ।

एवं सप्तविंशद् ग्रन्था आचार्यैः विरचिताः । एतेषां च महामहाग्रन्थानामवलोकनेनैव 'एते आनन्दतीर्थयतींद्राः वाय्ववतारभूताः सर्वज्ञाचार्याः' एवेति साधु सुस्पष्टं च प्रतीयेत ।

 

महोत्सव एव । स्वस्थापिताष्टपीठाधीश्वराणां अन्यतमस्मिन् धन्यतमे सन्यासिनि वर्षद्वयपर्यन्तं स्वयं सन्निहिता भूत्वा स्वेष्ट-देवतां श्रीकृष्णं परिपूजयन्ति श्रीमदानन्दतीर्थयतींद्राः ।

अत एव अद्यापि उडिपीक्षेत्रे 'शतंजीवशरदः शतम्' इत्यौ-पनिषदीमुक्तिमादेशं च अक्षरशः चरितार्थयन्तः ज्ञानवृद्धाः तपो-वृद्धा अपि पीठाधीश्वराः यतिपतयः पर्यायपीठाधिरूढं सन्यासिनं ज्ञानेन वयसा तपसा च शिशुमपि श्रीमदाचार्यवद् बहुमानयंति । आदृणन्ति च । अग्रपूजा-अग्रासनासीनत्वादि सर्वविधगुरुगौरवं सत्स्वपि सर्वपीठाधीश्वरेषु पर्यायस्वामिनामेव समर्प्यमाणं दृढ-यति तत्र सर्वज्ञाचार्याणां तदा सविशेषं सन्निधानम् ।

सत्यामप्येवं वस्तुस्थित्यां 'उडुपीस्वामिनः नाम श्रीकृष्ण-स्य केवलं अर्चका एव' इति कस्यचिद् कलिकुमारस्य परुषं वचनं न विचारसंहं न वा उत्तरदानायापि योग्यमित्यस्माकं अभिप्रायः । तत्तु उपेक्षाक्षममेव ।

अथवा नानेन वाक्येन विद्यमानपीठाधिपतीनां स्थान-मानयोः काचित्क्षतिः । यतः सर्वदापि श्रीकृष्णस्य पूजकाः आचार्या एव । अतोऽत्र अष्टमठाधीश्वराः केवलं श्रीकृष्णस्य अर्चका एवेति वचनस्य 'श्रीमदाचार्या एव श्रीकृष्णस्य केवला-र्चका इत्यत्र पर्यवसानं भवति । साक्षादाचार्येष्वेव परम्परया दोषारोपणधाष्ट्र्यं दौष्ट्यं च सधैर्यं प्रदर्शयतो महनीयान् नमस्कारेऽपि वर्जयेत् । अथवा

तुष्यतु दुर्जनः

श्रीकृष्णस्य अर्चकाः एव अष्टमठाधीश्वराः' इति वागु-च्चारमात्रेणैव यदि परमानन्दः भवेत् यस्यकस्यचिद् कुतो वा तस्य अल्पतोषिणः मनोमोदोच्छेदः कर्तव्यः ?

श्रीकृष्णस्य पूजा नाम न हि जघन्यं निंद्यं वा कर्म । तथा विचार्यमाणे सर्वेऽपि पीठाधीश्वराः तत्तद्देवार्चका एव । श्रीमदुत्तरादिमठाधीश्वराः तथा श्रीमद्राघवेन्द्रमठाधीश्वराश्च श्रीरामप्रतिमाया अर्चका एव । तथा एव उडुपीमठाधीश्वराः कृष्णार्चकाः। यासां प्रतिमानां स्पर्शने, समीपतरदर्शनेऽपि इतरजनानां अधिकारः योग्यता वा नास्ति तथाविधानां भगवतः सच्चिदानन्दस्वरूपायमाणविग्रहाणां अर्चकत्वमेव पीठाधिपतीनां वैशिष्ट्यम् । परममुख्यं च कर्तव्यम् ।

सा च भगवतः पूजा नाम भगवत्प्रीतिजनकव्यापारः । ते च साक्षात्पूजारूपाः, सत्सिद्धांतप्रसरण-ज्ञानदान-अन्नदान-निरन्तर-पाठप्रवचनादिरूपाश्च । केनापि च उपायेन "प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्" इति प्रतिज्ञायैव पीठमधिरूढवन्तः सर्वेऽपि उडुपीयतीश्वरा अद्ययावत् उभयविधामपि भागवतीं पूजां कुर्वन्त एव सन्तीति तादृशकृष्णार्चकत्वं तेषां गौरवायैव नतु लाघवोल्लासनाय। "श्रीमत्परमहंसपरिव्राजक... द्वैतसिद्धांतप्रतिष्ठापक... .शुभसंप्रदायप्रवर्तक' इत्यादितत्तत्पीठपरंपरागतबिरुदभूषणानि पदवीप्रशस्तिपत्रिकादीनि च तेषां यतीश्वराणां परमपवित्रं आदर्शं जगत एव निदर्शयन्ति । अथापि यत्केचित्प्राज्ञंमन्यमाना. लेखकाः पीठाधिपतीनां स्थानमानादिविषये क्षुद्रबुद्ध्या किमपि विलिख्य सवितरि धूलिप्रक्षेपसाहसं कुर्वन्ति तत्तु सर्वैः अपि तत्रापि सर्वपीठाधिपतिभिः सुस्पष्टशब्दैः सुतरां खण्डनीयमेव । अस्तु अस्मिन् वर्षे च सर्वेषु अपि माध्वयतिषु वयसा कनिष्ठा अपि मनसा महिष्ठाः, गुणैः गरिष्ठा, विद्यया-वरिष्ठाः श्री पलिमारुमठाधीश्वराः श्रीरघुवल्लभतीर्थाः स्वपर्यायपूजां परिसमाप्य श्री श्रीमद्भ्यः अध्मारुमठाधीशस्वामिपादेभ्यः

पर्यायपीठं समर्पयन् । १८-१-१९५६ दिनाङ्के प्रातः दण्डतीर्थे स्नात्वा श्रीकृष्ण, चंद्रमौलीश्वर, अनंतेश्वरादिदेवतादर्शनं गृहीत्वा यथाविधि श्रीमदाचार्याणां भद्रव्याख्यानसिंहासनम् अधिरुह्य पलिमारुमठाधिपतिभ्यः पर्यायपीठं स्वीचक्रुः अधमारुमठाधीशाः।

ततो विशाले राजाङ्गणे भव्ये सभामण्डपे उपविष्टेषु अष्टस्वपि पीठाधिपतिषु तत्रापि च नायकरत्न इव मध्ये विरचिते व्यासपीठे विराजमानेषु श्री श्री विबुधेशतीर्थेषु स्वागतगीत-पुरस्सरं प्रारब्धः सभाकार्यक्रमः । कौलगीशेषाचार्यैः संदेशवाचनं विहितम् । ततः अधमारुपीठाधिपतिभ्यः 'उडुपी संस्कृतपाठ-शाला' कलावृन्द, पडुबिद्रि संस्कृतशाला, मुम्बै प्राथमिकशिक्षण-संस्थादि नैकसंघसंस्थादिद्वारा संस्कृतमानपत्राणि समर्प्यन्त ।

ततः श्री रघुवल्लभतीर्थाणां सारगर्भितसंक्षिप्तभाषणा-नन्तरं श्रीमदधमारुस्वामिभिः श्री पी. नारायणाचार्याः 'न्याय-वेदांतवाचस्पतिः' इति, कट्टी श्रीनिवासाचार्यः 'द्वैतवेदांतकेसरी' इति च बिरुदभूषणैः अनुगृहीताः । ततः भारतीयलोकसभायाः उपाध्यक्षाः श्री. एस्. वी. कृष्णमूर्तिरायमहोदयाः 'प्रकृतपर्याये उडुपीक्षेत्रे अन्नसत्रेण सह ज्ञानसत्रमपि प्रचलिष्यतीति ज्ञात्वा महान्मे सन्तोष' इत्याद्युपन्यस्तवन्तः ।

ततः पर्यायपीठमिदंप्रथमतया सोत्साहमारूढवन्तः श्री विबुधेशतीर्थाः एवमुपान्यस्यन् "अयं उडिपी श्रीकृष्णः अन्न-ब्रह्मेति विश्रुत एव । 'अन्नं ब्रह्मेति' आघोष्य 'अन्नं बहु कुर्वीत' इत्याद्युपदिशंती भगवतीश्रुतिः सर्वोपजीव्यस्य अन्नब्रह्मणः अर्थात् उडिपीकृष्णस्य बहुविधम् आराधनम् कर्तव्यम् इत्युपदिशति । तदनुसारं वयमत्र अधुनाऽस्माकं पर्याये अन्नसत्र-ज्ञानसत्र-धर्म-सत्रादि सत्रत्रयद्वारा भगवत्सेवां कर्तुमुत्सहामहे । ईदृशानेक-

## कनकदासः

व्यासतीर्थाः– कनक !

कनकः– स्वामिन् ! आज्ञप्यताम् ।

व्यासः– देवं दर्शय ।

कनकः– कस्मै ?

व्यासः– मह्यं मम शिष्येभ्यश्च ।

कनकः– श्वः दर्शयिष्यामि । आज्ञा गुरूणां अविलंघनीया ।

व्यसः– श्वः कदा ?

कनकः– युष्माकं पूजावसरे !

* * * *

कनकः स्वाराध्यदेवं कृष्णं उपगत्य स्वगूरूणां आज्ञां स्वस्य प्रतिज्ञां च विज्ञापयामास । श्वः मध्याह्ने स्वामिपादानां पूजाकाले त्वं मठं गच्छ । केन रूपेण गच्छसि ?

देवः– भक्तपराधीनोऽहम् । त्वं यथा आदिशसि तथा तदा तेन रूपेण तत्र गमिष्यामि ?

कनकः– स्वामिन् ! उपहासं मा कुरु ।

देवः– नायम् उपहासः । त्वयोक्तरूपेणैव गमिष्यामि ।

कनकः– तर्हि श्वानरूपेण गच्छ ।

कृष्णः– कुतः ?

---

पुण्यकार्याणि कर्तुं अस्मासु शक्ति उत्साहं च प्रदातुं भगवानेव भवद्भिः सर्वैरपि संप्रार्थनीय" इति ।

अस्मिन्पर्यायोत्सवप्रसङ्गे प्रतिदिनं दशद्वादशसहस्रजनेभ्यः अन्नसन्तर्पणं क्रियते स्म । एवं विविधैः नानाधार्मिककार्यक्रमैः अयं पर्यायमहोत्सवः अपूर्वः असाधारणः प्रेक्षणीयः, प्रेक्षितवतां च चिरस्मरणीयः संवृत्तः ।

कनकः– तत्रत्य पण्डितेषु गीतापारायणपरेषु 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति तव श्लोकस्य अर्थं कियन्तो जानन्तीति सुस्पष्टं भवेत् ।

कृष्णः– तथास्तु ।

* * * *

भव्ये शिलामण्डपे व्यासराजयतींद्राणां पूजा प्रचलति स्म। पूजाकाल एव कनकदासः सर्वेभ्योऽपि देवसाक्षात्कारं कारयतीति वार्तां श्रुत्वा लक्षाधिका एव जनाः परमात्मानं प्रत्यक्षीकर्तुं तत्र मिलिता आसन् । पण्डिताश्च भगवदागमनमेव उत्प्रेक्षन्ते स्म । तदा आगतः कश्चन भैरवाकारः श्वा । पूजामण्डपे निःशङ्कं प्रविष्टं तं श्वानमालोक्य शुचिर्भूताः पण्डिताः पाषाणैगन्धकाष्ठैः ताम्रस्थालीभिश्च अताडयन् । तदा ततः पलायितः प्रत्यावर्तत कनकस्य कुटीरं प्रति । तदा कनकः तम् अपृच्छत् स्वमातृभाषायां कन्नडवाचि–

"डोंकुबालद नायकरे नीवेनेनूटव माडिदिरि ?"

संस्कृतच्छाया–

"वक्रवाल शुनःश्रेष्ठ किं किं भक्ष्यं नु भक्षितम् ?"

तदा स श्वानरूपीदेवः स्वलब्धं प्रहारोपहारं अकथयत् अदर्शयच्च क्षरत्क्षतजम् । तदा कनकः सहासं "स्वामिन् अलमनेन लोकविडम्बनेन" इत्यवदत् ।

सायङ्काले दूरात् प्रणम्य स्थितं कनकं व्यासराजा अपृच्छन् "कनक! कुतो वा तव देवः नागतः ।"

कनकः– स्वामिन् पूजावसरे आगत एव आसीत् । परं तु पण्डितैः ताडितः पीडितश्च प्रत्यावर्तत । पुनरेकवारं गीतार्थः सर्वेभ्योऽपि शिष्येभ्यः वक्तव्यः स्वामिपादैः ।

भागवतरत्न–

## श्री नरसिंहमूर्त्याचार्यतनूभुवः श्री जयतीर्थाचार्याः

बहुरत्ना वसुन्धरा । 'मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ।' वस्तुतः रत्नानि नाम स्वज्ञानप्रकाशेन जगदेव उद्धरन्तः उचेतयन्तः प्रबोधयन्तश्च पण्डिता एव । तथाविधोद्दण्डपण्डितमण्डलीमुकुटमण्डनमणीयमानाः बेंगळूरपुरवासिनः श्री. जयतीर्थाचार्यवर्याः उत्तरकर्णाटके सञ्चारक्रमेण धर्मप्रचारं कुर्वन्ति । तेषां भागवतपुराणं गीताप्रवचनं गुरुचरितानुवादं वेदार्थविवरणं च श्रोतुं प्रतिग्रामं दश-सहस्राधिका एव जनाः आगच्छन्ति । वेद-भारत-भागवत-रामायणादिमहाग्रन्था अपि मुखोद्गताः प्रतिदिनं प्रवचनसमये शतशः पठ्यमानाः श्लोकाः आचार्याणां अद्भुतां स्मरणशक्तिं द्योतयन्ति । गदगनागरिकास्तु तेषां मसृणमधुझरीमाधुरीधुरीणवाग्वैखरीं त्रिकालं प्रतिदिनं श्रावं श्रावं मुग्धाः स्निग्धाः भगवद्भक्तिबद्धाश्च भवन्ति ।

---

व्यासराजाः– श्वः पुनरेकवारं स्वामिनं प्रेषय । कीदृग्विध-रूपधारिणमपि अहमेव सुस्वागतेन सत्करिष्यामि ।

कनकः– यदाज्ञापयति गुरुराजः ।

कनकदासः स्वगृहमागत्य "स्वामिन् पुनरेकवारं गुरूणां दर्शनं दत्वा आगच्छ" इति स्वदेवं प्रार्थयामास ।

परेद्युः पूजावसरे महानेकः कृष्णसर्पः आगतः । सर्वेऽपि पण्डिताः 'सर्पः सर्पः' इति वदन्तः ससम्भ्रमं अपासरन् । व्यासराजस्वामिनस्तु 'समागत एव गोपाङ्गनाभुजङ्गः शेष-शायी शेषरूपेणेति' सानन्दं उत्थाय भक्तिभरेण तं कृष्णसर्पं कृष्णमेवं ज्ञात्वा पूजयितुं प्रारेभिरे । सुदूरात् कनकदासः बाष्प-गद्गदकण्ठः 'गुरो! हरिः आगतो वा न वा? भवतामाज्ञा पालिता । हरिगुरू प्रियेताम्' इति साष्टाङ्गं प्रणनाम । स्वामि-पादानां सर्पपूजां सुदूरादेव पश्यन् रोमांचितगात्रः बाष्पाकुलः व्यतिष्ठत् कनकदासः ।

(नीचजातिजातस्य अपि कृष्णभक्तस्य अस्य कनकदासस्य अवशिष्टचरित्रम् अग्रिमाङ्के)

Regd. No. B 7171



# मधुरवाण्याः वार्षिको विशिष्टाङ्कः

अयं च दशमः अङ्कः । मधुरवाण्याः द्वादशी सञ्चिका विशिष्टाङ्करूपेण प्रकाश्यते । सा च वर्षस्य अन्तिमा सञ्चिका एव बृहदाकारग्रन्थरूपेणैव प्रकाशनीया इति निर्धारितम् । सः मधुरवाण्याः वार्षिकोपहाररूपः ग्रन्थः शताधिकपत्रपुटैः, आकारेण, विषयगांभीर्येण च अतीव आकर्षकः सर्वसङ्ग्राह्यः स्पृहणीयश्च भवेदित्यत्र नास्ति सन्देहः । मधुरवाण्या अयं वार्षिकविशिष्टाङ्कः संस्कृतभांडागारस्य रत्नसंपदं नूनम् अभिवर्धयेदेव । तथैव संस्कृतवाङ्मयस्य एकां महतीं न्यूनतामपि आपूर्य वाग्देव्याः कण्ठशोभामप्यत्यधिकमेव समुल्लासयेत् ।

## तदत्र अवधीयतां सर्वैः

इदं च अपूर्वं सरसं सुन्दरं सर्वथैव सर्वैरपि संस्कृतज्ञैः अवश्यमेव सुवाच्यं संग्राह्यं ग्रन्थरत्नं ये मधुरवाण्याः वार्षिकधनं मनियार्डर-द्वारा प्रेषितवन्तः अथवा प्रेषयन्ति वा तान्प्रत्येव सम्प्रेष्यते । कतिपय व्ही. पीः कृत्वा महती एव हानिः अनुभूता अस्माभिः । अतः व्ही पीं. नैव करिष्यामः । स्वयं M. O. द्वारा एव शुल्कं सम्प्रेषयन्तु । विशिष्टाङ्कं च विना मूल्यं प्राप्नुवन्तु सर्वेऽपि ग्राहकाः इति सूचयामः ।

## ग्राहकेतरेषां तु विशिष्टाङ्कमूल्यम्

रूप्यकत्रयमितम् ३—०—० भवेत् । ग्राहकाणां मधुरवाणीशुल्के एव दीयते वार्षिकोपायनरूपेण । पञ्चरूप्यकेषु रूप्यकत्रयमूल्यमेकं अपूर्वं ग्रन्थं, वर्षभरं मधुरवाण्याः एकादशसञ्चिकाश्च समर्प्य अनृणी भवितुमिच्छति सम्पादकः । त्वर्यतां ग्राहकैः रसिकैः । प्रेष्यतां ग्राहकधनं, गृह्यतां विशिष्टाङ्कः, अनुगृह्यतां च अयं जनः ।

सम्पादकः

**मधुरवाणी कार्यालय, गदग**

(जि. धारवाड)

पर्यायपीठाधीशश्रीविबुधेशतीर्थस्वामिपादानां कृपापोषिता

# मधुरवाणी

उडुपी श्रीकृष्णमठद्वारा संचालिता ।



## शतायुः सौभाग्यशालिनः श्रीसुधीन्द्रयोगिनः

शश्वद् दण्डधरोऽप्यखण्डितशमश्चण्डो न कस्मिन्नपि ।
नित्योपोषण[illegible]द्वृत्तैस्तनुतनूः कौपीनभाग्योऽपि सन् ॥
शाटीसीम विहाय यस्य हि मनःक्षेत्रं न रागोऽस्पृशत् ।
तं वन्देऽद्य सुधीन्द्रनामकसुधीचन्द्रं यतीन्द्रं गुरुम ॥

१९५६ मे वैशाखसञ्चिका ।

## ❋ मधुरवाण्याः संचालकाः ❋

श्री श्री विबुधेशतीर्थाः अधमारुमठ, उडुपी प्रतिवर्षं ५०५ रू. प्रदाः
श्रीमन्तः पद्मनाभराव वैद्य महोदयाः ,, ५०५ ,,

प्रतिवर्षं १०१ रू. प्रदाः मधुरवाण्याः महासंरक्षकाः

श्री श्री भंडारगिरिमठाधीश-स्वामिपादाः
श्री श्री कूडलीशृंगेरीमठाधीश-स्वामिपादाः
श्री श्री पेजावरमठाधीश-स्वामिपादाः
श्री श्री शृंगेरीपीठाधीशश्रीमद् अभिनवभारतीतीर्थस्वामिपादाः
श्री. सी. डी. देशमुख, भारतगणराज्य वित्तमन्त्रिणः


## —▯ विषयानुक्रमः ▯—



Printed at the Hombali Printery, Gadag
by H. S. Hombali and Published by Pandharinathacharya
Galagali at Gadag.

# मधुरवाणी

द्वितीयवर्षे ] श्री दुर्मुखिसं. वैशाखसञ्चिका [ द्वितीयाङ्कः

हेयामपीह परजायामुपेत्य कुधिया यामिनीशवदनाम् ।
कायात्मनोरपरिमायान्यतां नु निरयायाहमासमतिथि:
श्रयादवेश कमलाया निवासगृह गेयानुभाव निगमैः ।
पायाद्भवोद्भवदपायाद् भवानयि कृपायादसांपतिरमुम् ॥१॥

सन्यासधर्मविषयेऽन्यान् प्रति द्रुतमुपन्यासवेगमुखरः ।
कन्यापनावयवविन्यासमूढ हृदुदन्यां क्षुधं स्मरसि नो ॥
अन्यायकर्मसु चरन् यासि किं नरकजन्याः शुचस्त्वमधुना
धन्यात्मनां विहतदैन्याय देवगणमान्याय तत् कुरु नमः ॥२॥

वैराभिवेशहृतधं रायैलोकमनुदारात्मना छलयतो ।
घोरापदां नरककारागृहेषु परिहाराय कस्तव भवेत् ॥
वाराशिजानयननीराजितं करुणपूरार्द्रमानसमतो ।
नारायणं दुरितभारापहं सततमाराधयस्व मनसा ॥३॥

योषावपुर्बहुपुरीषादिसर्वमलकोषायितं नरपशो ।
भूषादुकूलमुखवेषादिभिर्भवति तोषाय ते कथमहो ॥
दोषातिदूरमपि दोषाकरास्यमयि शेषाधितल्पमुदयत्- ।
पूषाभमुन्नतमनीषापथं नय तुराषाण्मुखामरनुतम् ॥४॥

कोशाधिपे विहितपैशाचकर्मणि दुराशावशादभिसरन् ।
आशांतधीः सुकृतनाशादभूर्विषयपाशावृतः किमधुना ॥
क्लेशान्मुमुक्षसि जडेशान मानव यदीशादिवन्दितपदे ।
काशामलस्मितरुचाशाप्रदीपकपलाशाधरस्य पत रे ॥५॥

जैवातृकाभवदनावाममोहकविभावानुलीनहृदयो ।
नावागमं तव हि सेवाविधानमपि भावाहितं भवहरं ॥
दैवाहतस्य भृशमेवाधुना क इह जीवातवो मम भवेत् ।
श्रीवासुदेव करुणावारिधे तव रमावांछितं पदमृते ॥६॥

# ❀ सुभाषितरसास्वादः ❀

क्वचित् सर्पोऽपि मित्रत्वं गच्छेन्नैव खलः क्वचित् ।
न शेषशायिनोऽप्यस्य वशे दुर्योधनो हरेः ॥१॥

दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् ।
उष्णो दहति चांगारः शीतः कृष्णायते करम् ॥२॥

गुणिगणगणनारम्भे न पतति कठिनी सुसम्भ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥३॥

श्रुते महाकवेः काव्ये नयने वदने च 'वाः' ।
युगपद् यस्य नोदेति स वृषो महिषोऽथ वा ॥४॥

निरक्षरे वीक्ष्य महाधनत्वं विद्यानवद्या विदुषा न हेया ।
रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥५॥

अर्थो नराणां पतिरङ्गनानां वर्षा नदीनां ऋतुराट् तरूणाम् ।
स्वधर्मचारी नृपतिः प्रजानां गतं गतं यौवनमानयन्ति ॥६॥

ख्यातः शक्रो भगाङ्को विधुरपि मलिनो माधवो गोपजातो ।
वेश्यापुत्रो वशिष्ठो रतिपतिरतनुः सर्वभक्षी हुताशः ॥७॥

व्यासो मत्स्योदरीयो लवणजलनिधिः पाण्डवा जारजाताः ।
रुद्रः प्रेतास्थिधारी त्रिभुवनविषये कस्य दोषो न चास्ति ॥८॥

सञ्चित्य सञ्चित्य जगत्समस्तं त्रयः पदार्था हृदयं प्रविष्टाः ।
इक्षोर्विकाराः कृतयः कवीनां मुग्धाङ्गनापाङ्गतरङ्गितानि ॥९॥

राजाश्रयस्तस्करताश्वपण्यमाथर्वणं चापि समुद्रयानम् ।
एतानि सिद्ध्यन्ति महाफलानि विपर्यये प्राणहराणि पञ्च ॥१०॥

अल्पीयसामेव निवासभूमित्यागाद् विपत्तिर्महतां न जातु ।
रत्नाकरात्सन्मणयोऽभियान्ति राज्ञां शिरः काकमुखानि भेकाः ॥११॥

दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् ।
कैरजीर्णभयाद् भ्रातर्भोजनं त्यज्यते वृथा ॥१२॥

कन्या निष्कासिता श्रेष्ठा वधूः श्रेष्ठाः प्रवेशिता ।
अन्नं सङ्कलितं श्रेष्ठं धर्मः श्रेष्ठो दिने दिने ॥१३॥

यदपथ्यवतामायुर्यदनीतिमतां श्रियः ।
तदेतत् काकतालीयं तदेतच्च घुणाक्षरम् ॥१४॥

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
तथा वेदं विना विप्रास्त्रयस्ते नामधारकाः ॥१५॥

# कालिदासदर्शनम्

लेखकाः- कर्णाटक कवीन्द्र द. रा. बेन्द्रे, M.A.
आकाशवाणी केन्द्र, धारवाड

कालिदासस्य काव्यानि नाटकानि च अधिकृत्य बहव एव विमर्शात्मकाः लेखाः प्रतिदिनं प्रकाश्यन्ते एव। तस्य कृतीनां भाषांतर-भावांतर-रूपान्तर-रसास्वादनादीनि अपि प्रायः सर्वासु अपि भाषासु शताधिकान्येव संवृत्तानि। तावता कस्या अपि अमरकलाकृतेः जीवनं नैव पर्यवसितं भवति। तत् नित्यवृद्धिं सदाप्रसिद्धिं च समाप्नोति। रामायणमहाभारतादीनामिव विराड् आकारो वा, गीताया इव 'भगवदुक्तिः' इति महाप्रौढिमा वा कालिदासकृतीनां नास्ति। अथापि कालिदासस्य साहित्यं स्वलालित्येनैव रसिकानां मनांसि आकर्षति। स्वस्य अन्तर्मुखतया जगतः प्रभव-विभव-अनुभवावलोकनाय प्रेरणां प्रयच्छति।

कालिदासस्यापि एकं रम्यं जीवनदर्शनं अस्ति। तस्य आद्यकृतौ आकारतः अत्यल्पकृतौ अपि 'ऋतुसंहारेऽ'पि तस्य दर्शनसाक्षात्कारः भवेत्। "द्वादशमासेषु जगति स्त्रीपुरुषाणां द्वन्द्वजीवनं कीदृशेषु सुखदुःखेषु परिपाकं भजति। तथा निसर्गस्य रमणीयता प्रणयिजीवनेषु कीदृशं वा आनन्दबोधं उज्जागरयति" इत्येतद् स्पष्टीभवति। परं तु मानवीयद्वन्द्वजीवनस्य साफल्यं केवलम् ईदृश-स्वच्छन्द-सहज-भावविलासेषु नैव पूर्णतां उपगच्छति। तस्य स्थायिभावस्य सत्वं परीक्षणीयम्। शिवलोकसन्निधौ एव वर्तमानानां कुबेरकुमाराणां यक्षाणां सुखसौभाग्यस्य का वा न्यूनता आसीत्? सम्पत्-सुन्दरी-सङ्गीत-सुरा-सुरत–सदायौवन–अमरजीवन–इच्छाभोग-स्वेच्छाविलासादिकं सकलमपि समृद्धमेव आसीत्। सर्वमपि सम्पन्नमेव च

आसीत् । तावता किं तेषां जीवितं सफलम् ? ? ?

नहि नहि नहीत्येव कुरुते कालिदासस्य दार्शनिकदृष्टिः । यक्षाणां इयमीदृशी सुखसाक्षिता अपारसागरे स्थितस्य क्षुद्र-मीनस्य अनिमिषत्वम् इव आभासिकमेव । सुखसंभोगस्य 'लावा'-रसे सन्तप्ताम्बुनि पापच्यमानस्य जीवनस्य तीव्रतरा तृष्णा नाम दुरन्तदाह एव । कामभोगैः कामतृष्णा कामदाहो वा न कदाचिदपि शान्तिं समाधिं वा उपगच्छति । अतएव कामधाम-सार्वभौमेन ययातिना "न जातु कामः कामानाम् उपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति यदुक्तं तत् न केवलं पौराणिकं सत्यं किन्तु तत्वतः तथ्यं सत्वतः पथ्यं अनुभवपूतं विवेचनोन्नीतं च । विरहवेदनाया अग्निपरीक्षायां स्वस्नेहस्थायिभावः यदि समुत्तीर्णः भवेत्तदैव कामः प्रेमपदवीं प्राप्तुं अर्हः भवति । मानवीय जीवनस्य ईदृशं सर्वविधपरीक्षा-समुत्तीर्णं शुद्धसुवर्णसवर्णं एकविधं व्यक्तित्वं विभूतिमत्वं च मेघदूते कस्यचिद् यक्षस्य चरित्रद्वारा कविः वर्णयति । सर्वेषामपि अस्माकं चित-चित्रकूटगतः वासना-यक्षः ईदृशीं दुःखदुर्दम्यां अग्निपरीक्षां यदि प्रयच्छति यदा प्रयच्छति तदैव तर्हि एव तत एव रससरोवरं गन्तुं मार्गः भवति । (अपूर्णम्)

## वाक्यपदीयम् ।

( V. Krishnamachariar Siromani ).

अस्ति खल्वेतदुभये तावद्वेदान्तिन एकत्विनो द्वैतिनश्च । एकत्विनोऽद्वैतिन इत्यनर्थान्तरम् । ये हि तत्वत एकमेव वस्तु सर्वपरिकल्पनातीतं भेदसंसर्गसमतिक्रांतमनाश्रितादिनिधनं, तदि-तरच्च सर्वं प्रातिभासिकमुपाधिशबलितभेदपरिकल्पितं परमा-

र्थतोऽसच्चातिष्ठन्ते त एवैकत्विनः । ये तु तस्मादेकस्माद्वस्तुनोऽन्यदपि वस्तुजातमविचाल्यप्रमाणसिद्धं परमार्थसदभ्युपयन्ति त एव द्वैतिनः । उभयेषामप्यमीषां स्वप्रेक्षानुसारोन्नीत आम्नाय एव प्रमाणम् । तथा ह्याह—

'तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधा गताः ॥'

इति । तत्र प्रथमे केचन शब्दाद्वैतमपरे च ब्रह्माद्वैतमातिष्ठमानाः स्वं स्वं मतमुपोद्बलयन्ति । ये खलु भर्तृहरिप्रभृतयः शब्दतत्वमेकमेव परमार्थतः सत् तदितरत् सर्वमपि प्रपञ्चजातं तदभिन्नं तद्विवर्तं परमार्थतोऽसच्च सङ्गिरते त एव शब्दाद्वैतिनः । इत्थं हि तन्मतसर्वस्वं जोघुष्यते—

'अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥'

इति । त एव द्वितीये ये खलु ब्रह्मतत्वमेकमेव सजातीयविजातीयभेदगन्धरहितमसत्याज्ञानानानन्दव्यावृत्तं शुद्धबुद्धमुक्तनित्यस्वरूपमातिष्ठंते भगवत्पादादयः। ब्रह्माद्वैतवादी मंडनोऽपि मात्रया शब्दाद्वैतवादमनुगृण्हानः कटाक्षयतीति सुविशदं तद्ग्रन्थपरिशीलिनाम् । एवं ह्याह— 'तस्माच्छब्दतत्वमेव तथा तथाऽवभासत इति सांप्रतम्' इति; 'सर्वज्ञेयं वाग्रूपान्वितं गम्यत इति तद्विकारस्तद्विवर्तो वा' इति च ।

तत्र यः खलु शब्दाद्वैतवादी भर्तृहरिः स स्वकीये वाक्यपदीये शब्दाद्वैतं सुस्थमुपन्यस्यन् स्वस्य शब्दतन्त्रागममित्थमुपदर्शयति— पुरा पाणिनीये व्याकरणे व्याडयुपरचितं लक्षग्रन्थपरिमितं संग्रहाभिधानं निबन्धनमासीत् । तच्च कालवशात्

सुकुमारमतीन् वैयाकरणान् प्राप्यास्तमुपयदुत्सन्नप्रायमभवत्। अथ व्याकरणतन्त्रस्याविच्छेदमभिवांछन् भगवान् पतंजलिर्महाभाष्यं निबबन्ध। एतच्च महाभाष्यं वररुचिकृतवार्तिकानां व्याख्यानरूपं संग्रहसंक्षेपभूतमेव। एतच्च भाष्यं बैजिसौभवहर्यक्षादिभिः शुष्कतर्कानुसारिभिर्विप्लावितमभूत्। दिष्टया कुतश्चित्सत्संप्रदायमधिगम्य ब्रह्मरक्षसा केनचित् चन्द्राचार्यवसुरातादीनां दत्तम्। वसुरातेन भर्तृहरयेऽयं व्याकरणागमः समुपदिष्टः। तेन च वाक्यपदीयं नाम कांडत्रयपरिमितं निबन्धरत्नमुपरचितमिति।

महाभाष्यकरं भगवन्तं पतञ्जलिं बहवो ग्रन्थकृतश्चूर्णिकारमामनन्ति। तथाहि। अयमेवभर्तृहरिः स्वकीयमहाभाष्यत्रिपादीव्याख्यायां दीपिकायामेवं ब्रवीति– "चूर्णिकारस्तु भागप्रविभागमनाश्रित्य कृत्स्न एव वर्ण उभयस्थानः। यथा भ्राष्ट्रपक्वः किलोशीपक्वश्च (?) (तिलपक्वश्च)। तत्र मुखवचनोऽप्यसौ नासिकावचनोऽपि यथा भ्राष्ट्रपक्वोप्यसौ किलोशीपक्वोऽपि (?) (तिलपक्वोऽपि)" इति मुखनासिकासूत्रे। ईदूत्सूत्रेपि– "तपरस्तत्कालस्येति तत्कालानां ग्रहणं यथा स्यात् कथं पुनर्भेदकत्वमुदात्तादीनां यावताऽनङादीनामुदात्तवचनमभेदकत्वे ज्ञापकमुक्तं चूर्णिकारेण" इति। घुसंज्ञासूत्रे च– "चूर्णिकारस्तु विकाराणाम्–" इत्यादि। अत्र च वाक्येषु चूर्णिकारो महाभाष्यकार एवेति विषयसंवादादवगम्यते। काव्यालङ्कारसंग्रहव्याख्याने प्रतीहारेन्दुराजोऽपि– "चूर्णिकारस्य त्वेवमादौ तद्भावाध्यवसानसमाश्रयेण नातिशयोक्तिभेदत्वमेवेष्टम्। यदाह- न तिङन्तेनोपमानमस्तीति" इति वदति। "न तिङन्तेनोपमानमस्ति" इति वाक्यं च सुप्विधायके सूत्रे भाष्ये परिदृश्यते।

अतश्च चूर्णिकारो महाभाष्यकार एवात्र सर्वत्र विवक्षितः। 'चूर्णि' इति महाभाष्यस्यैव नामांतरं स्यादित्यप्यूहितुं शक्यते।

वाक्यपदीयव्याख्याता वृषभदेवः 'सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः' इति कारिकास्थितो वृत्तिमेवं व्याख्यत्– 'अनेकत्वात् भाष्यस्याह– संग्रह इति। चूर्णिकारेण पठितम् 'संग्रह एतत्' इत्यादि। तेन ज्ञायते संग्रहप्रणेत्रा नित्यत्वमभ्युपगतमिति। अनुतन्त्रभाष्य इति पातञ्जलभाष्ये" इति। अन्यत्र च 'अनुतन्त्रं वार्तिकम्। भाष्यणामिति चूर्ण्यादीनाम्' इत्याह। पस्पशाह्निके भाष्ये– 'संग्रह एतत्प्राधान्येन विचारितं नित्योऽनित्योवेति' इति वाक्यमुपलभ्यते। अतश्चूर्णिकारं महाभाष्यकृतमेव विवक्षति वृषभदेवः।

वस्तुतस्तु भर्तृहरिणा त्रिपादिव्याख्यायां क्वचिद्भाष्य इति क्वचिच्चूर्णि इति च पृथग्व्यपदेशात्पातञ्जलभाष्यादन्य एव कश्चिच्चूर्णिग्रन्थ इति वक्तुं शक्यते। किञ्च महाभाष्यं व्याचक्षाणो भर्तृहरिः 'चूर्णिकारस्तु' इति तुशब्दसहचरितेन चूर्णिकारशब्देन मतान्तरस्थितमिव भगवन्तं पतञ्जलिमेवाभिदधातीति न हृदयङ्गमम्। अतश्च चूर्णिभाष्यनामानौ द्वौ पृथगात्मानौ ग्रन्थौ। अद्यत्वे सुलभो महाभाष्यग्रन्थस्तु तत्र तत्र चूर्णिसंवलित एव परिदृश्यते। अपि च पातञ्जलं भाष्यमनुतन्त्रव्याख्यानरूपमिति वृषभदेवो ब्रवीति। परिदृश्यमाने च महाभाष्ये सूत्रव्याख्यानमपि दृश्यत इति कथमसौ समग्रो ग्रंथः पातञ्जलो भवेदिति विमर्शका विमृशन्तु। चूर्णिग्रन्थः आचार्यकुणिकृत इत्यपि वर्तते कश्चित् प्रवादः!

अस्मिन्नवसरे प्राप्तकालमिदमपि विमर्शकानां सविध आवेद्यते– वाक्यपदीयं नाम सुप्रसिद्धं भर्तृहरिविरचितं प्रबन्ध-

रत्नं कारिकावृत्त्युभयरूपमेव । भर्तृहरिः स्वकृताः कारिकाः स्वयमेव वृत्तिकरणेन व्याचख्यौ । प्राचीनानामेषैव शैली यत् स्वकृतकारिकाणां स्वयमेव वृत्तिकरणेन व्याख्यानमिति । ब्रह्मसिद्ध्यादयो ग्रन्थास्तथैव वर्तन्ते । बहवो ग्रन्थकारा वाक्यपदीयस्थानीति कारिकाभिन्नान्यपि वाक्यान्युदाहरन्ति । वाराणसीमुद्रिते वाक्यपदीयकोशे ब्रह्मकाण्डस्थकारिकाणां काचन वृत्तिः परिदृश्यते । तां च वृत्तिं परिशोधकः पुण्यराजकृतां प्रकाशाभिधां चाभिधत्ते । ब्रह्मकांडावसाने च " इति श्रीमहावैयाकरणहरिवृषभविरचितवाक्यपदीयप्रकाशे आगमसमुच्चयो नाम ब्रह्मकांडं समाप्तम् ' इति मुद्रितं दृश्यते । वस्तुतो विचार्यमाणे भर्तृहरिविरचिता काचिदस्ति वृत्तिः किञ्चिद्विस्तृता । सैवात्र संगृहीता मुद्रितेति स्पष्टमवगम्यते । मद्रपुरस्थराजकीयलिखितपुस्तकालये स्वोपज्ञवृत्तिसमेताः भर्तृहरिकारिकाः सांप्रतमुपलब्धा वर्तन्ते । तस्या एव वृत्तेः संगृहो मुद्रितः । व्याख्याता वृषभदेवो विस्तृताया एव वृत्तेर्व्याख्यानमरचयदिति तत्रत्यप्रतीकोपादानेन निश्चीयते । नूत्नयोपलब्धे कोशे ब्रह्मकांडांते "इति हरिवृषभमहावैयाकरणोपरचिते वाक्यपदीये आगमसमुच्चयो नाम ब्रह्मकाण्डः समाप्तः" इति परिदृश्यते । भर्तृहरेरेव हरिवृषभ इति नामान्तरं स्यादिति शक्यते वक्तुम् ।

एवं च तद्वृत्तिपरिशीलनेन ' भर्तृहरिः बौद्धः ' इति केषांचित्प्रवादोऽपि निरस्तो भवति ।

~~~~~~~~

### केकावलिसुभाषितानि

१ × × × अग्निसंयुत-तृणं न जीवेत् क्षणम् ॥

२ ' ऋणाब्धिपतितोऽस्मि हा ! ' वदसि मोचयित्वा नतान् ।

[illegible]
~~~~~~~~

  

# पञ्चाप्सरः

राम: लक्ष्मण: सीता च दंडकारण्ये चलंति। वैशाखमास:, मध्यान्हसमय:, प्रचंड: आतप:। मार्गायासेन त्रय: अपि श्रांता:। तृष्णा सर्वानपि बाधते। जलशोधार्थं ते इतस्तत: अटन्ति। अत्रान्तरे दूरात् कमलगंध: आयाति। शीतल: वायु: मन्दं वाति, सुगन्धं आनयति, आनन्दं च जनयति। तदा ते अनुमानं कुर्वंति 'समीपे एव सरोवर: अस्ति' इति। तत: ते सरोवराभिमुखं धावन्ति। सरस्तीरं च गच्छन्ति।

आ:! कियत् सुन्दरमिदं सरो वरम्! किम्मिदं अमृतकुण्डं अथवा आनन्दसमुद्र:! स्फटिकवत् अतिस्वच्छं रुचिकरं च नीरं, रम्यं तीरं। अस्य दर्शनेन एव तृप्त: राम:, उल्हसित: लक्ष्मण:, आनन्दिता सीता। स्वच्छन्दं स्नानं यथेच्छं पानं ते कृतवन्त:। तीरे वृक्षस्य छायायां विश्रान्ता:।

अहो आश्चर्यम्! अद्भुतं इदं सरोवरम्। सलिलात् सङ्गीतं तरङ्गाद् मृदङ्गध्वनि:। जलांतरङ्गात् सङ्गीतध्वनि: श्रूयते। तरङ्गा: 'जलतरङ्गं' वादयन्ति। मधुर-गान-तान-वितानै: आपूरिता: दशदिश:। नर्तकीनां नर्तनस्य धिम् धिम् धिम् शब्देन पूर्णं वातावरणम्। वीणाया: मधुरमधुरा स्वरलहरी रंजयति निसर्गदेवीम्। परन्तु वैणिक: कुत्र? नर्तनस्य नूपुरध्वनि: श्रूयते, किंतु नर्तकी कुत्र? गायनस्य मञ्जुलस्वर: मोहयति मन:, परं कुत्र असौ तानसेन:? सर्वोऽपि शब्दप्रपञ्च:! सर्वत्रापि केवलं स्वर-संसार:। कुत आयाति अयं अनाहतध्वनि:? किमियं आकाशवाणी? अथवा पातालवाणी? अथवा जलदेवतानां सङ्गीत-रङ्गोत्सव:? किं वरुणाश्रमे शब्दसमारम्भ:? किम् एषा जलसमाधिभाषा? इत्यादि प्रश्नार्थकचिन्हानि रामस्य

नयने, लक्ष्मणस्य वदने, सीतायाः भ्रूभंगे, च लिखितानि आसन्।

वाल्मीकिः उवाच

"अयि वत्साः ! किमत्र आश्चर्यम्। अगम्यः खलु ऋषीणां महिमा। विचित्रश्च तपः प्रभावः। यदि कुतूहलं श्रूयतां तपस्विनः क्रांतिकथा। पूर्वं अत्र मांडकर्णिः नाम तपस्वी आसीत्। तस्य घोरं तपः दृष्ट्वा देवाः भीताः अभवन्। तस्य मुनेः तपोभङ्गाय पञ्च अप्सरसः देवेन्द्रेण प्रेषिताः। ताः सुरसुन्दर्यः तस्य ऋषेः आश्रमं आगताः। तत्र मधुरं सङ्गीतं, मनोहरं नर्तनं च अकुर्वन्। मुनिः तासां अप्सरस्त्रीणां गान-तान-हाव-भाव-हास्य-लास्यैः मोहितः न अभवत्। गायनं कृत्वा कृत्वा तासां सुरवेश्यानामेव ध्वनिः क्षीणः। नर्तनं कृत्वा कृत्वा तासामेव पादौ पीडितौ। परं मुनिः तु तूष्णीं शिलावत् स्थितः। तासां गणिकानां विविध-विलास-विनोद-विहारैः तस्य किंचिदपि विकारः न अभवत्। तासां गायन-वादनादि-शृंगारचेष्टाः सः पश्यति। परं तु तस्य तत्र न मोहः न स्नेहः, न तोषः नापि द्वेषः, न मोदः न वा खेदः। यथाप्रकारं निश्चितमनसा जपमालां गणयन्नेव आस्ते।

तदा तस्य धैर्यं वैराग्यं च दृष्ट्वा मुग्धाः ताः स्वर्गवेश्याः पराजिताः अवमानिताः लज्जिताः च अभवन्। तस्य मुनेः पुरतः स्व नूपुराणि तालिका वीणाः वेणून् च निक्षिप्य तमेव शरणं गताः। प्रार्थनां च एवं अकुर्वन्—

"योगिराज वयं पराजिताः एव त्वया। त्वां मोहितुं अत्र आगत्य वयमेव स्वयमेव मुग्धाः। तव तपः प्रभावेण च आकर्षिताः। न वयं अधुना स्वर्गं गच्छामः। न पुनः स्वर्गसौख्यं इच्छामः। स्वर्गे वा भवतु भूमौ वा भवतु वेश्या वेश्या एव।

अस्मिन् जीवने एव जुगुप्सा जाता जायते च। पुरस्तात् ईदृशी अतीव निन्द्या तुच्छा च वृत्तिः नैव कर्तव्या इति निर्धारः कृतः अस्माभिः। प्रेमव्यवसायाद् वन्यजीवनमेव धन्यजीवनं, मान्यजीवनं च। वयम् अत्रैव तवसेवां कुर्वाणाः परिचारिकाः भवामः। अनुग्रहं कुरु। अनुमतिं देहि" इति।

तासां स्त्रीणां भक्तिं दृष्ट्वा मुनिः प्रीतः अभवत्। तत्रैव आश्रमे निवासाय सम्मतिं दत्तवान्। तदाः ताः पञ्च अप्सरसः प्रतिदिनं ऋषेः पूजार्थं पुष्पाणि, नैवेद्यार्थं कन्द-मूल-फलानि, स्नानाय जलं, पाकाय काष्ठं, यज्ञाय समिधः, आनयन्ति। दूरादेव तं भक्त्या पूजयन्ति। एवं द्वादशवर्षाणि ताभिः मुनेः अविच्छिन्न-सेवा कृता।

ततः एकस्मिन् दिने तासां सेवाभावेन प्रीतः प्रसन्नः च सः मांडकर्णिः महर्षिः ताः उक्तवान्–

"अयि सुरगणिकाः! वरं याचत। अपेक्षितं वः ददामि।" तदा सन्तुष्टाः ता अवदन्– मुने! तत्सम्बोधनं– गणिका इति सम्बोधनं– अस्मभ्यं यथा न लगति तथा कुरु।

मुनिः– कथमिदं शक्यं? वेश्याजातौ उत्पन्नाः वेश्या एव। कथं ताः गृहिण्यः भवेयुः।

अप्सरसः– तपःप्रभावस्य किं नाम असाध्यम्?

मुनिः– तपःप्रभावेण जातिः कथं परिवर्तयितुं शक्यते?

अप्सरसः– विश्वामित्रः ब्रह्मर्षिः तपःप्रभावेण ब्रह्मर्षिपदवीं लब्धवान्। किमस्माकं ते गृहिणीपदं अपि दातुं न शक्यते। यदि महर्षिः मनः करोति तदा सर्वमपि घटते एव सुसूत्रम्। अनुग्रहं कुरु। वेश्याः गृहिणीः कुरु इति।

तदा ऋषिः बहूनेव तरुणान् ताः परिणेतुं कथितवान्।

स्ववेश्यानमपि पाणिग्रहं कर्तुं कः कुलीनः सिद्धः भवति। न कोऽपि-

अन्ते मुनिः ताः अवदत्। "यदि यूयं जरठं परिणेतुं सम्मताः तदा अहमेव युष्माकं पाणिग्रहणं करिष्यामि" तदा ताः अतीव आनन्देन ऋषिं परिणीतवत्यः। अयं मुनिः तस्मिन् धर्मयुगे योग्याः सुरनारीः परिणीय तासामुद्धारम् अकरोत्।

ताः तरुण्यः रूपसंपन्नाः, सः मुनिः जीर्णः जरठः दरिद्रः विद्रूपः विरक्तश्चः। तथापि तस्य वैराग्यसंपदा लुब्धाः ताः पंचापि अप्सरसः अतीव संभ्रमेण संतोषेण उत्साहेन च विवाहं कृत्वा यथापूर्वं सेवां कुर्वन्ति स्म। पर्णकुटीरे वसन्ति स्म, कन्दमूलफलानि खादन्ति स्म।

तासां विरक्तभावेन तुष्टः ऋषिः एकस्मिन् दिने तरुणः भूत्वा इदं दिव्यं सरोवरं निर्मितवान्। तासां बहुकालीन सेवायाः फलं प्रदातुं अस्य सरोवरस्य जलस्य अन्तः दिव्यरूपेण ताभिः विहारं करोति। गृहिणीपदलाभेन संतुष्टाः ताः अपि पंचाप्सरसः गायन–वादन–नर्तनादिभिः तं प्रीणयन्ति परिचरन्ति पूजयन्ति प्रसादयन्ति च। तासामेव मुनिकुटुम्बिनीनां संगीत-मृदङ्ग-नूपुर-किङ्किणीनां मंजुळः ध्वनिः अत्र तरंगेभ्यः श्रूयते। अत एव अस्य सरोवरस्य पञ्चाप्सरः इति नामधेयम्"

तार्श्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः
तटाके निर्मितं तासां अस्मिन्नन्तर्हितं गृहम ॥
तथैवाप्सरसः पञ्च निवसन्त्यो यथासुखं
रमयन्ति तपोयोगान्मुनिं यौवनमास्थितम् ॥
तासां संक्रीडमानानां एष वादित्रनिस्वनः
श्रूयते भूषणोन्मिश्रः गीतशब्दो मनोहरः ॥
इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम्
निर्मितं तपसा राम मुनिना माण्डकर्णिना ॥

वाल्मीकि रामायणे अरण्यकांडे ११ सर्गः

# कविप्रशंसा

श्रीरामचरितं प्रोक्तं येन लोकहितेच्छया ।
स्रष्टारं काव्यसृष्टेस्तं वाल्मीकिमभिवादये ॥१॥
योऽष्टादशपुराणान्तं स्वर्गसोपानमातनोत् ।
कृष्णद्वैपायनः सोऽसौ नाभ्यर्च्यः कस्य वा भुवि ॥२॥
निःसपत्नानि काव्यानि यस्याद्यावधि सर्वतः ।
कवीनामग्रणीरेष कालिदासो विराजते ॥३॥
भवभूतिर्भयार्तानां विनोदनपटुर्न चेत् ।
रसिकश्रेणयः कुत्र लभेरन् रतिमात्मनः ॥४॥
कादम्बरीरसं नार्याः सेवन्त इति शृण्वता (न आर्याः सेवंते) ।
कादम्बरी निर्मितेयं नवा बाणेन तत्कृते ॥५॥
सुबंधुं बंधुमात्मीयं मन्यंते रसिकोत्तमाः ।
यत्कृतिर्वासवार्थापि प्रलोभयति मानवान् ॥६॥
बाणेन पञ्चबाणेनाश्रितो हर्षः स्वलीलया ।
हर्षयत्यधिकं यद्वन्मणिः काञ्चनसंयुतः ॥७॥
स्तुत्वा श्लोकसहस्रेण लक्ष्मीं लब्धवतो दृशं ।
सश्लेषापि प्रसादाढ्या भारती वेंकटाध्वरेः ॥८॥
राजशेखर नामापि कविशेखर उच्यते ।
बालरामायणं यस्य प्रथितं जगतीतले ॥९॥
साहित्यदर्पणं यस्य कविभिर्दर्पणीकृतम् ।
कविराड् विश्वनाथोऽसौ लोके विजयतेतराम् ॥१०॥
आर्यासप्तशतीं ग्रथ्नन् गोवर्धनमहाकविः ।
राजते स्थिरया कीर्त्या गोवर्धन इवाचलः ॥११॥

—मुकुन्दराय

## केकावलिसुभाषितानि

१ सती क्षयति भूषिताऽऽपतिसमागमं ह्यन्तरे ॥
२ परं प्रभुवरैर्गृहे सकलवस्तु सङ्ग्राह्यते ।
विचार्य न गुणोनतामधिक आदरो दीयते ॥
३ जनेष्विति च दृश्यते पिबति बालकोक्तं पिता ।
प्रवर्धयति वर्णितं तदितरान् मुदा मोहितः ॥

# कूपे चन्द्रः ! (ग्राम कथा)

( ले:— साहित्यमणिः श्री. के. प. देवदासः, उडुपी । )

अतिशांतं किल कुरुते हृदयं । परितः स्थितिरत्र पुरात्सुभगा ॥
कृषिकर्मरताः खलु भाग्यरताः । न हि कृत्रिमता नगरेषु यथा ॥१॥
दयितागमनं प्रतिपाल्य, सती । अह ! काचिदतिष्ठद्द्वारि यदा ॥
दयितोऽति मुदा समुपागतवान् । "नाथ, नमोऽस्त्वि"त्यहसद्बाला ॥२॥
चन्द्रो विकिरत्यमृतकणान् त- । न्निशि सोऽधावज्जलमानेतुम् ॥
यावत्कुम्भमपूरयदहहा ! । दृष्टश्चन्द्रं कूपे स युवा ॥३॥
"हा हा कटकामानय दयिते" । त्युच्चैराक्रोशत्सम्भ्रान्तः ॥
"नूनं चन्द्रः कूपेऽपप्तत्, । नोद्धन्तुं प्रभवेदि"त्यमनुत ॥४॥
दयिताव्हानं श्रुत्वा बाला- । नीता कटकामति सम्भ्रान्ता ॥
बध्वा रज्ज्वा कटकां कूपे- । ह्यवतारयति स्मोद्धर्तुं तम् ॥५॥
सलिलं प्रविशन्त्यां कटकाया । मविशच्चन्द्रस्तामतिवेगात् ॥
'लब्धश्चन्द्र इहे'त्यति तुष्टः । सहसा रज्जुं स युवाऽकृष्टः ॥६॥
पाषाणाधः संलग्ना सा । कटका सुदृढा व्यचलन्न च वै ॥
'अतिभारोऽयं शशधर' इति हा ! । सरभसमाकृष्य- अहो बत ! ॥७॥
त्रुटिता रज्जुः, पतितश्चायं । भूमावूर्ध्वमुखं- किमु कष्टम् ! ॥
'प्रिय, हा ! किमभूदि'ति विलपन्ती । तरुणी कथयति पतितोऽप्येवम् ॥८॥
"पश्याकाशं, मम सामर्थ्या- । दुपरि गतोऽयं नक्षत्रेशः ॥
यद्यप्यपतं किमभूद्दयिते ! । लोको नन्दतु, यावावासम्" ॥९॥

~~~~~~~~~~

# बहिरालापात्मकप्रश्नः

( रचयिता— चिदम्बरशास्त्री राजजोशी, दोरनहळ्ळी )

कोऽयाचीत्त्रिपदां भुवं क्षितिपतिं वीराग्रगण्यं बलिं ।
को वा पुष्परसं पिबत्यनुदिनं को लोकचक्षुर्भवेत् ॥
कः सम्राट् प्रथितो विजित्य समरे दिल्लीश्वरं युक्तिभि- ।
र्देवानां गुरुरत्र कोह्यभिमतो वाञ्छन्ति किं भूमिपाः ॥१॥
किं प्राधान्यमुपैति सुष्ठुकरणं सर्वेन्द्रियाणां परं ।
देवक्यास्तनयस्य बांधवजने कंसस्य नामाऽस्ति किं ॥
को वा स्यान्नृपनीतिशास्त्रकुशलः कः कल्किवाहो मतो ।
सत्प्रश्नोत्तरमध्यमाक्षरमणी राराजतां भारते ॥२॥
~~~~~~~~~~

# कृतारम्भो हि संघर्षो न क्वचिज्जायते वृथा

[ अनुवादकः– नारायणशास्त्री काङ्करः, जयपुरम् ]

नैतद् भो युज्यते वक्तुं, संघर्षो जायते वृथा ।
परिश्रमो वा आघाताः, सन्ति ते न फलप्रदाः ॥
न शत्रुर्लभते दैन्यं, न च निष्फलतामपि ।
यथा यद् विद्यते सृष्टौ, स्थास्यति तत् तथैव हि ॥१॥

यथाऽशा वञ्चिका जाताः, मिथ्या स्याच्च तथा भयम् ।
उत्तिष्ठोत्तिष्ठ तस्मात्त्वं, प्रवर्तस्व स्वकर्मणि ॥
वयस्काः सन्ति येऽदृश्याः, सम्मुखे धूम्र-सन्ततौ ।
ते शत्रुमनुधावन्तः, स्याज्जयेयुस्त्वदाश्रिताः ॥२॥

श्रान्ता ततिस्तरङ्गाणां, संघर्षन्ती भृशं तटैः ।
पूर्वं प्रतीयते याऽसौ, वैकल्यं प्राप्स्यति ध्रुवम् ॥
परं सतत-यत्नेन, कृत्वा खातादिकं महत् ।
तूष्णीं सा हि समायाति, प्रवहन्ती शनैः शनैः ॥३॥

प्राच्यां दिशि यदा सूर्यः, उदेति प्रत्यहं तदा ।
तस्यालोको न व्याप्नोति, केवलं प्राग्-गवाक्षकम् ॥
किन्तूत्तरोत्तरं यावद्, वर्धतेऽयं विरोचनः ।
व्याप्नोत्यस्यातपः सर्वां, दिशं वा विदिशं तथा ॥४॥

कदाप्येवं विचिन्त्य त्वम्, आशां नैव परित्यजेः ।
कृतारम्भो हि संघर्षो, न क्वचिज्जायते वृथा ॥

[ एतत्पद्यानि आंग्ल-साहित्ये सुप्रसिद्धकवेः श्री. ए एच. क्लफ-महोदयस्य वर्तन्ते । कविः अनया कवितया तान् इटेलियन्-सैनिकान् प्रोत्साहयति, ये रण-क्षेत्रे आस्ट्रेलियन-सैनिकानां वर्धमानां शक्तिं विलोक्य जय-प्राप्तेः आशां सर्वथा अत्यजन्, युद्धात् पलाय्य च शत्रुभिः अलक्षित-स्थाने गत्वा आत्मानम् अरक्षन् । एते एव भावाः पुरतः स्थित-संस्कृतपद्येषु गुम्फिताः सन्ति । जीवन संग्रामे पराजित-पुरुषाणां कृते तु इमानि पद्यानि स्वर्णे सुगन्धस्य कर्म कुर्वन्ति । अनुवादकः ]



# मृच्छकटिका

## ( विहङ्गमावलोकनम् )

( लेखक:- एन्. एस्. गदगकर, बी.ए.
के. इ. बोर्डस् हायस्कूल, माळमरडि, धारवाड. )

भारतीय नाट्यसाहित्यरङ्गे शूद्रकस्य मृच्छकटिकाया अत्युन्नतं स्थानं वर्तते । नाट्यकलादृष्ट्या स कालिदासभासभवभूत्यादीनां पंक्तौ स्थाप्यते विद्वद्भिः । समुपजातकुतूहलाः प्रेक्षकास्तस्यापूर्वं प्रकरणं बहुवारं प्रेक्षितवन्तः । किन्तु तेषां रसतृष्णा न स्तोकांशेनापि तृप्तिमेष्यति । शूद्रकनिर्मितौ वसन्तसेना-चारुदत्तौ चित्रार्पिताविव भूत्वा रसिकप्रेक्षकचित्ते चिरमपि स्थास्यतोऽत्र न कोऽपि सन्देहः ।

प्रथमतः शूद्रकस्य प्रकरणे-मृच्छकटिकायां बहूनि पात्राणि सन्ति । सन्निवेशा विपुलाश्च । संक्षेपतस्तस्य प्रकरणं समाजस्य सुस्पष्टचित्रान्वितं । आदौ तस्य दृश्यवैविध्यं प्रेक्षकचित्तमपहरत्यवर्णनीयानन्दं च प्रददाति । मृच्छकटिक प्रकरणनिर्मात्रा शूद्रकेण वैशिष्ट्योपबृंहितं पात्रवर्गं सृष्टं वर्तते । अस्मिन् रूपकेविद्वान् ब्राह्मणः, कुलस्त्रीसदृशी वाराङ्गना, बुद्धिमान् विदूषको, घोरदर्शनः खलनायको, द्यूतविद्यापारङ्गता :स्तेना, बौद्धभिक्षुरधिकरणकादयः सर्वे रङ्गस्थलं प्रविशन्त्यात्मनो हृदयं सोत्साहं प्रदर्शयन्ति रञ्जयन्ति च लीलयैव ।

हास्यरसनिष्पत्तिप्रसङ्गे शूद्रकस्य पात्रमत्युज्वलमिति प्रतिभाति । मैत्रेयः सत्यमेव व्यक्तित्वपरिपूर्णः । चारुदत्तविषये कीदृशीतस्यानुकंपा । नूनमापत्समुद्धरणधीरधीस्तस्य वशङ्गता । किं बहुना । मैत्रेयश्चारुदत्तस्य जीवितं । एवं सुरसपात्रं विना मृच्छकटिकप्रकरणं न शोभत इति मे मतिः । शकारस्य खल-

  

सम्पादकीयम्

# विशिष्टाङ्कस्य का गतिः

"तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे ।
मौनं मुञ्चति किञ्च कैरवकुले कामे धनुर्धुन्वति ॥
माने मानवती जनस्य सपदि प्रस्थातुकामेऽधुना ।
धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ॥

'श्रेयांसि बहुविघ्नानि । विशिष्टाङ्कमाविष्कर्तुं कृता सर्वविधाऽपि सिद्धता । शताधिकानि एव काव्यपुस्तकानि महाद्रव्यव्ययमपि अंगीकृत्य विक्रीतानि । अनेकान्येव महाकाव्यानि आलोकितानि आलोडितानि आलोचितानि च । सर्वानपि विमर्शात्मकलेखान् गृहीत्वा यावदहं मुद्रणालयमगच्छं तदा सः मुद्रणालयाधिपः " मासद्वयपर्यन्तं मुद्रणालयमुखमपि नैव पश्यन्तु भवन्तः । सर्वकारीयादेशप्रकारेण मासद्वयात्मक एव अवधौ निर्वाचकसूचीपट्टिका (होटर्सलिस्ट) महती एत्र मुद्रणीया वर्तते । इदानीं मासिकाङ्कमपि प्रकाशयितुं नास्माकम् अवकाशः, दूरेऽस्तु तावद् विशिष्टाङ्कप्रकाशनम् । आगस्टमासि युष्माकं मुद्रणं विशिष्टाङ्कस्य सुशकं भवेदिति भाति । इदानीं च नैव शक्यते । क्षम्य-

---

पात्रं केवलं चारुदत्तस्य स्वभावौन्नत्यस्य परां कोटिं प्रदर्शयितुं विवरीतुमेव रूपककर्तृणा निर्मितमिति सत्यं सहजं च । समाजस्थे मौर्ख्यखलत्वेऽनेन निःशङ्कं प्रकटीक्रियेते ।

उपसंहारे शूद्रकस्य साहित्यिक लक्षणानि प्रोक्तव्यानि । तदन्तरेण तस्य प्रतिभायाः कल्पना सामान्य वाचकाय न स्पष्टं भवेत् । शूद्रकस्य नाट्यशैली न क्वापि समासभूयिष्ठा । दीर्घसमासा विरलाः । ललितपदबन्धयुक्ता नवरसपरिपूर्णा शब्दालंकारार्थलिंकारसम्पन्ना सा । अन्ते वास्तव जीवननिरूपणत्वात् एतद् प्रकरणं दर्पणसदृशमस्तीति मेऽभिमतम् ।

तामिति" नम्रत्वेनैव उन्नमन्नेव अवादीत् । ततो मया इतरमुद्रणालयेषु विचारितम् । सर्वत्रापि वदनविवरवल्गत्कांतिसांद्रो 'न' कारः एव । तदा पुनः निराशः निर्विण्णश्च भूत्वा तमेव मुद्रणालयाधिपमुपगत्य 'विशिष्टाङ्को मास्तु' यथाप्रकारं यथास्मत्समयं च वैशाखस्य मासिकाङ्कमपि मुद्रयन्तु इति दैन्येन प्रार्थितवान् । तदा योग्येन सत्यसन्धेन सत्यपि कार्यबाहुल्ये प्रतिश्रुतवागुल्लंघनं नैव कार्यमिति प्रामाणिकविचारेण तेन मुद्रणालयाधीश्वरेण 'हुँ' कार वरः ॐकारप्रसादश्च प्रदत्तः । तत्प्रसादफलस्वरूपैव इयं सञ्चिका । 'सर्वनाशे समुत्पन्न' इति न्यायेन इदानीं विशिष्टाङ्कस्य आशां परित्यज्य सामान्यसञ्चिकयैव सन्तोष्टव्यमापतितम् । ईदृशे व्यतिकरे अमुं सर्वसाधारणं अङ्कं मुद्रयित्वापि आत्मानं वीरं कर्तृत्वशक्तिमन्तं च मन्यमानः मुहुर्मुहुः स्वपृष्ठं समास्फालयन्नपि अहं वाचकानां क्षमामेव प्रार्थये । अगस्टमासि च नियतमेव सुन्दरतराकारेण विचारभरभुज्यमानलेखसार्थैश्च परमरमणीयं रसिकस्पृहणीयं सहृदयसमास्वादनीयं च 'महाकाव्यनामकं' विशिष्टाङ्कम् अवश्यमाविष्करिष्याम एव । तदा च विशिष्टसञ्चिकारूपा काव्यकादम्बिनी महाकाव्यमाधुरीझरीमेव प्रवाहयित्वा चिरं प्रतीक्षमाणानां रसिकचातकानां रसपारणां कारयिष्यति । इदानीं च दैवीविपत्त्या मुद्रणं प्रतिबद्धमिति सर्वथा पराधीनेऽस्मिन् जने नैव कुप्येयुः सुधिय इति विश्वसिमः ।

### उपकारस्मरणम्

मधुरवाण्याः वार्षिकमूल्यं परःशता एव ग्राहकाः प्रेषितवन्तः । तेभ्यः सर्वेभ्यः वयं शतशो धन्यवादान् समर्पयामः । तेषां उपकारभरं च कृतज्ञताबुद्ध्या संस्मरामः । मम एकाकि-

  

तया कार्याणां च बाहुल्यात् प्रेषितधनेभ्यः सर्वेभ्यः पृथक् पत्रं विलिख्य अभिनन्दनं कर्तुं न शक्नोमि । अतः ग्राहकैः न विमनायितव्यम् । अनेनैव पत्रमुखेन समर्पितैः धन्यवादैः लब्धोत्तरा भवन्तु इति सम्प्रार्थयामि । परमस्य वर्षस्य प्रारम्भ एव मधुरवाण्यै विशेषसाहाय्यं कृत्वा केचनपरमोदारा महांतः नितरां प्रोत्साहितवन्तः । तेषां पुण्यश्लोकानां महनीयानां नामोल्लेखपुरस्सरं धन्यवादान् अर्पयित्वा तेषां सर्वेषामपि विशेषसहायकारिणां कलियुगकर्णानां भूद एव श्रेयः प्रेयश्च भूयो भूय आशास्ते मधुरवाणी–

| | |
|---|---|
| श्रीमत्पूज्याः गुरुसार्वभौमाः श्रीमदधमारुमठाधीशाः | रू. १०० |
| श्रीमन्तः कृष्णराव नायिक हरपनहळ्ळी मुळगुन्द | १०० |
| श्रीमती रोजाबाई नागप्पय्या देशपांडे मुळगुन्द | १०० |
| श्री. रामप्पय्य देसायरु काटापूर जहागीरदार मूगनूर | ५० |
| ,, चव्हाणसहोदराः गदग | ५० |
| ,, पद्मनाभाचार्य गुडि वीरनारायणदेवस्थान व्यवस्थापकाः गदग | २५ |
| ,, अनन्तराव जालीहाळ वकील गदग | २५ |
| ,, बिन्दूराव सुङ्कद बीदर | ३० |

मधुरवाण्याः धनसंग्रहार्थं प्रचारार्थं च अतीव आदरपूर्वकं प्रयतमाना गदगनगर पोलीसशाखामुख्याधिकारिणः श्री कुलकर्णि महोदयाः अपि नितरां अभिनन्दनीयाः सुतरां श्लाघनीया एव । परन्तु प्रतिष्ठापराङ्मुखा एते शाब्दिकप्रशंसां न सहन्त इति हार्दिकमेव अभिनन्दनं तेषां करिष्यामः ।

तथा मधुरवाण्याः सर्वतोमुखप्रगतये प्रयत्नस्य परांकाष्ठामेव अनुतिष्ठन्तां सर्वेषामपि गदगनागरिकाणां सानन्दमभिनन्दनं चिकीर्षामः ।

## परमहंसानां परमानुग्रहः

मधुरवाणी उत्तरोत्तराभिवृद्धिं प्रसिद्धिं प्रगतिं प्रसारं च प्राप्नोति पुरस्तादित्यत्र नास्त्येव नः सन्देहः। यतः 'प्रसादचिन्हानि पुरः फलानि' इति वचनानुसारेण अधुना भूयसामेव मठाधिपतीनां पुरःफलाभिशंसीनि आशीर्वचनानि भूरिधनं च लभ्यते मधुरवाण्या। उडुपीपर्यायपीठाधीश्वराः श्री श्रीमदधमारु मठाधीशस्वामिपादास्तु प्रतिवर्षं मधुरवाण्यै ५०० रूप्यकान् प्रदास्याम इति आश्वासितवन्तः। श्रीमन्तः पद्मनाभराव वैद्य महोदयाश्च यावज्जन्म अहं मधुरवाणीसंरक्षकभारं वोढास्मि इति प्रत्यजानन्।

श्रीमत्परमहंसपूज्य श्री श्री शृङ्गेरीजगद्गुरवोऽपि १०० रूप्यकान् सद्यः प्रदाय प्रतिवर्षमपि एवमेव प्रदास्याम इत्याश्वासितवन्तः।

श्री श्रीमत्परमहंसपरिव्राजकाचार्य श्री काञ्चीकामकोटी पीठाधीश श्रीमत्शङ्कराचार्यस्वामिमहाराजा अपि २५ रूप्यकान् संप्रेष्य परमानुग्रहं प्रदर्शितवन्तः।

तथा श्रीमत्परमपूज्याः श्रीहरिहरपूरमठाधीश श्रीमदभिनवरामानन्दसरस्वती स्वामीमहाराजा अपि २५ रूप्यकान् प्रदाय अन्वगृण्हन् इमां पत्रिकाम्। प्रतिवर्षमपि एवं दातुं प्रत्यजानंश्च

तथा श्री श्रीमत्परमपूज्य परमहंस श्रीकाणूरमठाधीश स्वामिपादाः अपि सदयं सानुग्रहं च २५ रूप्यकान् प्रतिवर्षवद् इदानीमपि संप्रेष्य प्रोत्साहितवन्तः।

तथा श्री श्रीमत्परमपूज्य परमहंस श्री भीमनकट्टीमठाधीशस्वामिपादा अपि २५ रू. संप्रेष्य अन्वगृण्हन् पत्रिकां सम्पादकं च पत्रपूर्वकम्।

# विमर्शवेदिका

अभिनव-संस्कृतम-माधुरी (Modern Sanskrit Literature) मूल्यं १-४-०
संकलयिता:- नारायणशास्त्री काङ्कर:, जयपुर महाराजा कॉलेजाध्यापक:
प्रकाशक:- दी स्टूडण्ट्स बुक कम्पनी, जयपूर

संस्कृतवाङमये एव अपूर्वोऽयं १४३ पुटपरिमित: संकलनात्मक: ग्रन्थ:। अद्यतनरसिकानां यद् अपेक्षितं आसीत् तदेव प्रदत्तं श्री काङ्करमहोदयै:। अत्र पद्यखण्डे संस्कृतसाहित्ये सुप्रसिद्धानां अष्टादशनवकवीनां नव्यकाव्येभ्य: रसवन्ति कतिपय पद्यानि उध्दृत्य स्थालीपुलाकन्यायेन संस्कृतस्य नववाग्वैखरी रसमाधुरी च सम्यगेव प्रकटीकृता। गद्यखण्डेऽपि त्रयोदशलेखकानां ललितलेखोल्लेखै: गीर्वाणगिर: गद्यवैभवमपि साधुप्रदर्शितमास्ते। नूनमेतेषां गद्यपद्यानां सकृदवलोकनेन सहृदयानां तृप्ति: नोत्पद्यते, किन्तु तृष्णैव। तत्रैव एतत्सङ्कलयितु: प्रयत्नस्य साफल्यं वरीवर्ति। एतद् ग्रन्थसन्दर्शनेन स्पष्टं प्रतीयते यत्

---

एतेभ्य: सर्वेभ्योऽपि पीठाधिपतिभ्य: शतशो धन्यवादान् सहस्रश: अभिनन्दनानि कोटिशश्च प्रणामान् सश्रद्धं बद्धांजलिपुटा: समर्पयाम:। इतरे सर्वेऽपि उडुपीक्षेत्रगता: सर्वज्ञपीठारूढा: स्वामिपादा अपि एवमेव मधुरवाण्यै मुक्तहस्तेन साहाय्यदानाय समाश्वासनानि प्रदत्तवन्त एव। तेभ्योऽपि नैकसप्रश्रयप्रणामान् समर्प्य इतरेऽपि सर्वे पीठाधिपतय: संस्कृतोद्धाराय प्रयतमानामेनां पत्रिकां प्रोत्साहयन्तु प्रोन्नमयन्तु च इति साञ्जलिबन्धं प्रार्थयाम:। सम्यग्विदितेतिकर्तव्यताजागरूकेषु मठाधिपतिषु अधिकनिवेदनमपि अचातुर्यं अतिचापल्यं गुरुबुद्धिगौरवौन्नत्याऽपरिज्ञानं वा न: द्योतयेदिति अत्रैव विरम्यते इति शम्।

—सम्पादक:

# रत्नावलेः कर्ता श्रीहर्षः ।

"रत्नावलेः कर्ता कोऽयं श्रीहर्षः" इति विचार्यमाणे "अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः । यथा "अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालंकृता रत्नावलीनाम नाटिका कृतेत्यस्माभिः श्रोत्रपरम्परया श्रुता ।" इत्येतस्माद्वचनाद् रत्नावलीनाटिकायाः कर्ता श्रीहर्षोनाम राजेति स्फुटं भवति । नास्मादधिकमस्य वृत्तं नाटिकायामस्यामन्यत्र वा समुपलभ्यते । उपर्युक्ते श्रीहर्षपञ्चके प्रथमौ द्वौ राजानौ । अतस्तौ नास्य ग्रन्थस्य प्रणेतारौ । इतरांस्त्रीनुद्दिश्य विचारः कर्तव्यः । काश्मीराधिपतिर्हर्ष एवास्य रचयितेति बुइलसनपण्डितस्तर्कयते । नैतत्प्रामाण्यं भजते । तथा हि– अयं काश्मीराधिपतिः श्रीहर्षस्त्रयोदशाधिकैकसहस्रतमात् क्रिस्ताब्दात् पञ्चविंशत्यधिकैकशताधिकैकसहस्रतमं क्रिस्ताब्दं यावन्महीं शशास ।

---

नाद्यापि संस्कृतकाव्यनिर्झरिणी शुष्का । सन्त्येव च सन्ति रसवन्ति लघूनि महांति च काव्यानि ।

"पदे पदे च रत्नानि योजने रसकूपिकाः । भाग्यहीना न पश्यन्ति बहुरत्ना वसुन्धरा ॥"

परमस्माकं सौभाग्यवशाद् श्री नारायणशास्त्रिणः संशोधकबुद्ध्या सर्वा अपि रसकूपिका अवगाह्य तद्रसमाधुरीं एतद्ग्रन्थपुटसंपुटेषु आनीय सहृदयानां पुरतः निक्षिप्तवन्तः । स्कूल-कालेजेषु पठ्यपुस्तकतया नियोजयितुं च अतीव योग्यतममिदं पुस्तकम् । संस्कृतविद्वद्भ्यो विद्यार्थिभ्यश्च नितरामुपयुक्तं उपकारकं च । नात्र सर्वेषां नवकवीनां गद्यपद्यानि सङ्कलयितुमपारीति पुनरन्योऽपि ग्रन्थः तैः प्रकटीचिकीर्षितः । सोऽपि तेषां मनोरथः अचिरादेव फलेग्रहि भूयादिति आशास्महे ।

रत्नावल्याः प्रथमाङ्कगतमष्टमं पद्यं द्वितियाङ्कगतानि द्वितीय-तृतीय-चतुर्थाष्टमपद्यानि क्षेमेन्द्रेण स्वीय औचित्यालङ्कार नाम्नि ग्रन्थे उदाहृतानि । अयं क्षेमेन्द्र एकादशशतकेऽभवदिति बुल्लरमहोदयः साधयति । तच्च यथार्थम् । तेन रत्नावलेः कर्त्रा ततोऽपि पूर्वं संजातेन भाव्यम् इत्येतत् स्पष्टं भवति । द्वादश-शतकोत्पन्नेनैकादशशतके निर्मितस्य ग्रन्थस्य रचयित्रा भवितव्यम् इति न शक्यते वक्तुम् । ततोऽपि पूर्वंसमुत्पन्नः कविरस्या अवश्यं रचयिता स्यात् ।

तथा च जयापीडस्य भूभृतोऽमात्यो दामोदरगुप्तः स्वीये कुट्टिनीमते नाम ग्रन्थे रत्नावल्याः प्रथमाङ्कस्थं चतुर्विंशं पद्यमुदाहरति । अयं जयापीडः अशीत्यधिकसप्तशततमात् क्रिस्ताब्दात् त्रयोदशाधिकसप्तशततमं क्रिस्ताब्दं यावन्महीमलंकृतवानिति पुरावृत्तविदां मतम् । पण्डितदुर्गाप्रसादस्तु अयं भूपः पंचपंचाशदुत्तरसप्तशततमात् षडशीत्यधिकसप्तशततमं क्रिस्ताब्दं यावदासीदिति ब्रूते । यथा तथा वा भवतु रत्नावलीनाम नाटिका क्रिस्ताब्दस्याष्टमशतकात् पूर्वं लोके प्रसिद्धाऽऽसीत् । तथा चास्याः प्रणेता श्रीहर्षो नाम भूप इत्येतन्निश्चितम् । एवं च रत्नावले रचयिता श्रीहर्षो नाम नृपतिः सप्तमशतकान्नार्वाचीनः । तेन हि सप्तमे शतके सम्भूतेन स्थानेश्वरकान्यकुब्जाधिपतिनाऽमुष्या नाटिकायाः प्रणेत्रा नूनं भाव्यम् ।

### मतान्तरपरामर्शः ।

"रत्नावल्याः प्रणेता श्रीहर्षो विक्रमादित्यादभिन्नः । कालिदासस्य हि मालविकाग्निमित्रं नाम नाटिका संवदति रत्नावल्या । अतो मालविकाग्निमित्रस्य प्रणयने कालिदासेन रत्नावली गृहीताऽऽदर्शतया । भासो भासको धावकश्चेति नामत्रयं

राजकुलस्य रजकस्य । एष एव धावको रत्नावलेः प्रणेता । तस्याः कृते तस्मै श्रीहर्षेण तेन राज्ञा प्रभूतं धनं दत्तम् । सा च स्वीया कृतिरिति लोके प्रख्यापिता"। इति कश्चित् पण्डितः प्रतिपादयति । परं तद् यथार्थप्रमाणाभावान्नापरे सहन्ते । श्रीहर्षस्य वैदुष्ये कवित्वे च न संशयलेशोऽपि । प्रियदर्शिका-रत्नावलि-नागानन्दनाटकानि यथा निर्मितानि तथा "अष्टमहा श्रीचैत्यस्तोत्रम्", "सुप्रभातस्तोत्रम्", "जातकमाला" चैतेऽन्ये-त्रयो ग्रन्था अपि विरचिताः । एषां प्रथमे बुद्धस्याष्टानां चैत्यानां वर्णनम् । द्वितीये बुद्धस्य प्रातः स्तोत्रम् । तृतीये तु बोधिसत्त्वकथाः वर्णिताः । अपि च मधुवनसमुपलब्धे लेखेऽस्य त्रीणि पद्यानि समुपलब्धानि ।

### किमेष बौद्धः शैवो वा ?

श्रीहर्षस्य रत्नावलिः प्रियदर्शिका च नाटके । नागानन्दं तु नाटकं । रत्नावलेः कथानकं क्रिस्ताब्दस्य प्रथमे शतके सम्भूतस्य गुणाढयस्य बृहत्कथायाः संगृहीतं । प्रियदर्शिकायां प्रियदर्शिकावत्सराजयोः प्रणयप्रसङ्गो निबद्धः । रत्नावल्यां तेनैव सह सागरिकायाः प्रेमव्यवहारो ग्रथितः । अत्र वत्सराजस्य द्वितीयविवाहोत्तरमेव चरितं दर्शितं न तु सर्वम् । अस्य सभायां वैदिकबौद्धपण्डिता आसन् । तदानींतने काले बौद्धाचारस्य प्राबल्यादस्य कृतौ तत्र तत्र स एव विचारो दरीदृश्यते । नेदमसाम्प्रतम् । नागानन्दस्थान् प्रसङ्गांस्तथाविधान् विलोक्य हॉलादयः पण्डिता एतं बौद्धमनुमिमते । परं तत्र शिवभक्तेर्दर्शनान्नेदं सहन्ते परे । नागानन्दरत्नावल्योः रचयिता नैक इति मॅकडोनलो लिखति । परं स्वमतमेतत् स एव न साधयति सप्रमाणम् ।

किं रत्नावलेः कर्ता बाणः?

रत्नावलेः कर्ता बाण एव न तु श्रीहर्ष इति बहूनां विदुषां मतम् । तेषां मध्ये डॉलपण्डितः प्राथम्यं भजते ।

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

रत्नावल्याः प्रथमाङ्कगतः श्लोकोऽयं बाणस्य हर्षचरितस्य पंचमोच्छ्वासगतेन श्लोकेन शब्दशः संवदति"। इति तत्साधयितुं प्रमाणं च पुरस्करोति सः । परं तस्मिन्नुच्छ्वासेऽस्य श्लोकस्य किञ्चिदपि साम्यं भजमानः श्लोक एव नास्ति । षष्ठे तूच्छ्वासेऽयं श्लोको विद्यते–

"द्वीपोपगीतगुणमपि समुपार्जितराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥"

अत्रापि शब्दशः साम्यं सर्वथैव नास्ति । नास्त्यर्थतोऽपि । "विधिः" इत्ययमेक एवशब्द उभयत्र समानः । एकेन शब्देन द्वाभ्यां वा यदि ग्रन्थयोरेककर्तृत्वं साध्यं स्यात् तदा जगति महती विप्रपत्तिजयित । किं च शब्दसाम्यं कल्पनासाम्यं छन्दःसाम्यं च केवलं ग्रन्थानामेककर्तृत्वे प्रमाणं चेद् इतिहासविदां बुद्धिर्व्यामोहकलिलं न कदापि व्यतितरिष्यति ।

"श्रीहर्षाख्यस्य राज्ञो नाम्ना रत्नावलिं नाम नाटिकां कृत्वा धावकाख्यः कविर्बहु धनं लेभे" इति काव्यप्रकाशस्य टीकाकृता यल्लिखितं तद्गतेन धावकेन धावति किल हॉलपण्डितस्य मतिरिमं तर्कम् । नान्यदस्य तर्कस्य किञ्चित् प्रमाणम् । अयथार्थप्रतिपादनमस्य पण्डितस्य प्रकृतिरेव । यथा–नैषधीयचरितस्य रचयिता श्रीहर्षो भोजात् प्राचीन इति प्रतिपादयताऽनेन हॉलपण्डितेनोक्तम् । "नैषधीयचरितगता भूयांसः श्लोका भोजकृते सरस्वतीकण्ठाभरणे ग्रन्थे ग्रन्थकृतोदाहरणे-

नोद्धृताः" इति। वस्तुतः सरस्वतीकण्ठाभरणे नैषधीयचरितगतः एकोऽपि श्लोको नोपलभ्यते। एवं च रत्नावलीनाटिका बाणकृतेति तस्य प्रतिपादनं न सर्वथा मानाधीनम्।

### ग्रन्थकर्तृत्वम्।

रत्नावली-प्रियदर्शिका-नागानन्दानां कर्तृत्वेन श्रीहर्षस्य तत्र तत्र निर्देशो वर्तते। तथा च यथा सातवाहन-भोज-भर्तृहरि-शूद्रकादयो राजानः प्रथितयशसः कवयस्तथा श्रीहर्षोऽपि। अपि च–

"काव्यकथास्वपीतमप्यमृतमुद्वमन्तम्", "अस्य प्रज्ञायाः शास्त्राणि, कवित्वस्य वाचः, गुणगणस्य संख्या न पर्याप्तो विषयः"। एवमादिभिर्वचोभिः स्वयं बाणेन श्रीहर्षो वर्णितः। किं च "मालवराजस्योज्जयिनीराजधानीकस्य कविजनमूर्धन्यस्य रत्नावल्याख्यनाटिकाकर्तुर्महाराजश्रीहर्षस्य" इति मयूरशतकस्य भावबोधिन्यां टीकायां मधुसूदनसरस्वतिः श्रीहर्षं रत्नावलीनाटिकाकर्तारं कविजनमूर्धन्यं निर्दिशति। नांदीप्रस्तावनादिसादृश्यवशादस्य नाटकत्रयस्य रचयिता एक एव। स च श्रीहर्षो महाराज इति स्फुटं प्रतीयते।

प्रियदर्शिकानागानन्दयोः कर्त्रा श्रीहर्षेण रत्नावल्याख्या नाटिकैव किमिति धनेन क्रीता। न ज्ञायते। प्रमाणातिगं पित्र्यं रिक्थं भजमानेन बहुधनेन द्रव्यलोभेन स्वयं रचिता रत्नावल्यैव किमिति विक्रीता। यदि धनतृष्णैव तत्र हेतुः ततोऽपि सुमहान् धनलाभो दिगन्तविश्रान्तयशसोः कादम्बरीहर्षचरिताख्ययोर्ग्रन्थयोर्विक्रयेण जायते।

### शिवभक्तिर्बुद्धोपासना च।

रत्नावलीप्रियदर्शिकागतनान्दीतः श्रीहर्षः शिवभक्त इति प्रतीयते। प्रत्युत "बुद्धाः जिनः पातु वः"। "पातु दृष्टी मुनींद्रः"।

इति नागानन्दनाटकस्य नान्द्यास्तदङ्कगतैरन्यैः प्रमाणबहुलैस्तस्य बुद्धोपासना प्रतीता भवति । तथा च "वत्से वन्दस्वात्रभवन्तं भदन्तम् । एष ते भर्तुः हृदयं द्वितीयमस्माकं च गुरुः"। इति हर्षचरिते श्रीहर्षः स्वभगिनीं राज्यश्रियं वदति । अपि च यदा विरक्ता सा दीक्षां गृहीतुकामा तदा सतत्रैवं प्राह "इयं तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाणि" इति । किं च तस्मिन्नेव हर्षचरिते गुरुं प्रति श्रीहर्षस्य विज्ञापने बुद्धविज्ञाने परमा निष्ठाऽभिव्यक्ता भवति । नागानन्दस्य तु संविधानकं बुद्धतत्वान्वितम् । तत्तु पुरस्ताद्व्याख्यास्यामः । ह्वेनत्सङ्गस्तु श्रीहर्षो बौद्ध एवेति वर्णयति । श्रीहर्षस्य ज्यायान् भ्राता बौद्ध एवासीदिति मधुवनलेखगतात् "परमसौगतः" इति विशेषणाद् विदितं भवति । तदानीं लोके सर्वत्र वेदोक्त देवतोपासना बुद्धतत्वज्ञानेन समं संपृक्ताऽऽसीत् । तेन हिंसावर्ज्यं वेदोक्तं कर्म बुद्धतदितरजनसाधारणम् । तस्माच्छ्रीहर्षस्य ग्रन्थेषु उभयविध आचारः प्रतीतो भवति ।

### राजधानी राज्यं च ।

प्रथममस्य राजधानी स्थानेश्वरनगरे पश्चाच्च कान्यकुब्जपुरे आसीत् । राज्यवर्धनेन हतस्य मालवराजस्य राज्यं श्रीहर्षेण राज्ञा स्वराज्ये समावेशितम् । ततस्तेन उज्जयिनी स्वराजधानी कृता । इतीदं मधुसूदनसरस्वतिपण्डितस्य लेखादवगम्यते । श्रीहर्षस्य राज्यम् उदीच्यां दिशि हिमगिरिं यावत् दक्षिणस्यां दिशि नर्मदां यावत् प्रतीच्यां पञ्चनदप्रान्तं प्राच्यां च वङ्गदेशं यावद् विस्तीर्णम् । सच चत्वारिंशतं वर्षाणि राज्यसिंहासनमलञ्चकार । पञ्चाशदधिकषट्शततमे क्रिस्ताब्दे स दिवं गतः ।

श्रीहर्षेण स्वीया कालगणना समारब्धा । सा च व्यवहारे प्रसृताऽऽसीदिति "दूतकोत्रमहाप्रमातारमहासामन्तश्रीस्कंदगुप्तः महाक्षपटलाधिकरणाधिकृतसामन्तमहाराजेश्वरगुप्तसमादेशाच्चोत्कीर्णं गुर्जरेण संवत् २०+५ मार्गशीर्षवदि ६"। इति ताम्रलेखतो विज्ञातं भवति ।

## समस्यापूरणक्रमोपक्रमः

सन्त्येव अत्र अस्मिन्नपि आंग्लयुगे बहवः संस्कृतज्ञाः। संस्कृतज्ञेषु अपि बहव एव गद्यपद्यनिर्माणे निपुणाः वर्तंते। तत्र च केचन तादृशं संस्कृते श्लोककरणकौशल्यं साधयितुं प्रयतमानाः अपि वर्तंते । प्रकाशनाय अवकाशाभावात् बहूनामेव उदयोन्मुखसंस्कृतकवीनां काव्यस्फूर्तिः तत्रैव शुष्यति। एवं स्वस्वस्वांत सैकत'सहरा'मरुसीमसु शोशुष्यमाणानां नव्यकाव्यझरीणां वाग्वैखरी-मधुमाधुरीम् अभिव्यञ्जयितुं सहृदयान् अनुभावयितुं आस्वादयितुं च नितरां समुत्सुकते मधुरवाणी । उदितानां उदेष्यतां च नवकवीनां कवित्वविकासाय सुप्तसारस्वतसत्वोद्बोधनाय च समस्यापूरणक्रमः अतीव उपकारकः अत्युपयुक्तश्च । अत इदानीं सेयं समस्यापूरणपद्धतिः पुनः प्रारिप्सिता मधुरवाण्या। तदत्र सर्वैरपि पंडितैः विशेषतश्च शालाकाँलेजाध्यापकैः सोत्साहं भागः गृहीतव्यः। छात्राश्चापि एवं समस्यापूरणाय स्वस्ववर्गेषु प्रचोदनीयाः। (अग्रिमाङ्के पूरणीया समस्या)

वाणी कृपाणीहते

पूर्त्यवधिरेतस्याः जुलै १५ तारकान्तः

अत्र 'कृपाणी इह ते, कृपाणी ईहते, कृपाणी हते' इत्यादिप्रकारेण बहुधा पदच्छेदः कर्तुं शक्यते भावानुसारेण।

# प्राप्तिः सादरस्वीकारश्च ।

सर्वतंत्रस्वतंत्रश्रीमत्परमहंसपरिव्राजकाचार्य श्रीभगवदाचार्यस्वामिमहाराजैः भूयांस एव ग्रन्था विनिर्मिताः प्रेषिताश्च परामर्शार्थं । नाधुना तेषां समेषां सुविमर्शनावसर इति नाममात्रं निर्दिश्य सादरस्वीकारं प्रणतिकर्म च कुर्मस्तराम् ।

१) ब्रह्मसूत्रस्य वैदिकभाष्यम् । प्रथमाध्यायमात्रस्य २०० पुटात्मकं हिंदीभाषामयसारांशसहितम् ।
प्राप्तिस्थानं- **रामानंदसाहित्यमंदिर अलवर (राजस्थानं) मूल्यं ५-०-०**

२) सामवेदसंहितायाः सामसंस्कारभाष्यम्,
हिन्दी अनुवादेनसहितम् ४४० पुटपरिमितं । प्राप्तिस्थानं- **शाह प्रभुलाल भीखाभायी व्यासवाडा पेटलाद** (गुजरात) व्हाया आनन्द

३) भारतपारजातम् ।
४) पारिजातसौरभम् ।
५) पारिजातापहारः ।
त्रयाणामपि भागानां संकलितम् **मूल्यं १८—०—०**
त्रिष्वपि एतेषु सरसकाव्यग्रन्थेषु महात्मनः गांधीमहोदयस्य उज्वलं जीवनचरित्रं चारु चित्रितमास्ते । प्राप्तिस्थानं— **श्री. रोहित मेहता C/o. थिआँसफिकल सोसायिटी, बनारस-सिटी.**

६) पुरुषसूक्तम् । पुरुषाभरणाख्येन भगवदाचार्यभाष्येण समलंकृतम् **मूल्यं ०—१२—०**
प्राप्तिस्थानं- **रामानन्द साहित्यमन्दिर अलवर** (राजास्थान)

७) रामानन्ददिग्विजयः । विंशतिसर्गात्मकं सरसं महाकाव्यम्, तृतीयावृत्तिः **मूल्यं ३-०-०**
प्राप्तिस्थानं- **रामानन्द साहित्यमन्दिर अलवर** (राजास्थान)

एतेषां च सर्वेषामपि ग्रन्थरत्नानां सुविस्तृतां समालोचनां यथावसरं करिष्यामः ।

Regd. No. B 7171

# ... मधुरवाणी परिवारः ...

| | | | | | |
|---|---|---|---|---|---|
| प्रतिवर्षं | १०००रू. | प्रदाः | मधुरवाण्याः | संजीवकाः | इति व्यपदिश्यं |
| ,, | ५०० | ,, | ,, | संचालकाः | ,, |
| ,, | १०० | ,, | ,, | संरक्षकाः | ,, |
| ,, | ५० | ,, | ,, | सहायकाः | ,, |
| ,, | २५ | ,, | ,, | पोषकाः | ,, |
| ,, | १० | ,, | ,, | अनुग्राहकाः | ,, |
| ,, | ५ | ,, | ,, | ग्राहकाः | ,, |

ये पञ्चनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं पत्रिका प्रेष्यते ।

वर्षे यदा कदापि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राह-कता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यंतं द्वादशसंचिकाः प्रदीयंते।

विना मूल्यं आदर्शसंचिका न प्रदीयते । अवलोकनार्थं सञ्चिका अपेक्षमाणैः अष्टाणकपोस्टटिकीटप्रेषणं कार्यम् ।

व्ही. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारम्भे मनिऑर्डरद्वारा एव मूल्यं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असु-वाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्य-मयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

सर्वोऽपि पत्रव्यवहारः अधस्तनसङ्केतेन कार्यः

**पण्ढरीनाथाचार्य गलगली**

सम्पादकः मधुरवाणी, गदग ( कर्णाटक

पर्यायपीठाधीशश्रीविबुधेशतीर्थस्वामिपादानां कृपापोषिता

# मधुरवाणी

उडुपी श्रीकृष्णमठद्वारा संचालिता ।



दोर्द्योतद्दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः
सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः ।
गण्डस्थानन्तघण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो
विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः ॥

क्रोडं तातस्य गच्छन् विशदबिसधिया शावकं शीतभानो-
राकर्षन् भालवैश्वानरनिशितशिखारोचिषा तप्यमानः ॥
गंगाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो ।
मात्रा सम्बोध्य नीतो दुरितमपनयेद् बालवेषो गणेशः ॥

सम्पादकः प्रकाशकश्च

पं. पण्ढरीनाथाचार्यः गलगली

वार्षिकमूल्यम् (५) रूप्यपञ्चकम्

१९५६ सप्टंबर (भाद्रपद) मासस्य सञ्चिका गदग

**सूचनाः—** टिलकविशिष्टाङ्कमेव ज्येष्ठ-आषाढ-श्रावणमासानां संयुक्ताङ्कं मत्वा अमुं भाद्रपदाङ्कं सदयमवबोधयन्तु विलम्बापराधं च क्षाम्यन्तु इति प्रार्थये। पुरस्ताच्च समये नियतमाविष्क्रियन्त अङ्काः इति आश्वासयामः। —सम्पादकः

## —☐ विषयानुक्रमः ☐—

# मधुरवाणी

द्वितीयवर्षे ] श्री दुर्मुखिसं. भाद्रपदसञ्चिका [ षष्ठोऽङ्कः

## मङ्गलाचरणम्

शुभानि श्रीजानिर्दिशतु दयया नीरदरुचिः ।
प्रपन्नां पाञ्चालीमविषहशुचालीढहृदयाम् ॥
परित्रायल्लीलाविसृमरदुकूलालिरचना-
कुविन्दो गोविन्दो विकसदरविन्दोपममुखः ॥१॥

कदा वा कालिन्दीतटविकसदिन्दीवरवने ।
समाखेलद्भृङ्गीकुलमधुरसङ्गीतमुखरे ॥
हरिः केलीकुञ्जे सुरभिसुमपुञ्जे परिसरन् ।
स्मराबाधां राधां मम हृदसमाधाववतरेत् ॥२॥

त्वं चापलं सपदि मुञ्चाधुना कुपथसञ्चारकर्मणि सखे ।
किञ्चाहिराजसयमञ्चाधिरूढमसिपिञ्चागमैरघहरैः ॥
पश्चाप्युदास्य पतिपञ्चाननान् विततपाञ्चालराजतनया-
याञ्चाप्रसारितपदं चामरग्रहविरिञ्चादिसेवितमजम् ॥३॥

## मासावतरणिका

पङ्कैरद्य रजस्वला मलिनयन्त्युर्वीं, समृद्धा जडाः ।
जातं निष्कमलं जगत्, सुमलिनैर्लब्धा घनैरुन्नतिः ॥
सर्पन्ति प्रतिमन्दिरं द्विरसनाः, सन्त्यक्तमार्गो जनः ।
भाद्रस्यास्य कलेश्च सम्प्रति भवत्येकैव राज्यस्थितिः ॥१॥

 

# अधुनाऽपि वा चक्षुरुन्मील्यताम्

पूर्वं बहुषु लेखेषु नेतृमानिनां सनातनधर्मविध्वंसनव्रत-धारिणां सुधारकाणां प्रच्छन्नसुधारकाणां च दुष्कृतिपरिणामं प्रदर्श्य ततः परावर्तनविषये नैजमाशयमाविरकुर्म वयम् । मसृणतर-शिलातले वर्षणमिवास्मदभिहितं निरर्थकमिति जानंतोऽपि, 'उप-देशो हि प्रकोपाय न शांतये' इति सुभाषितरहस्यमवगच्छन्तोऽपि 'काले विहितमनुदितमनुतापं जनयेदिति' न्यायमनुसृत्य स्वकर्तव्य-मन्वतिष्ठामहि । परमिदानीं सनातनधर्मह्रासपरिहाराय धार्मि-कैरपि यदवश्यं कर्तव्यमस्ति तदधिकृत्य विचारयितुमभिलषामः।

भारतेऽस्मिन् बौद्धविविधविध्वंसव्यापारादनुध्वस्तः सव-नादिकर्मलवनायैव बद्धपरिकराणां भवनागशायिभवनविनाशन-प्रणयिनां भुवनातिभीषणानां यवनानां दुरन्ताक्रमणादपि किंचि-दप्यक्लांतः सनातनधर्म इति तद्रक्षणे विहितोदासान्विदुषो वीक्ष्य नितरां विषीदति चित्रीयते च चेतः । न किल न विदितं विदु-षामिदं यदविकलायां विनाशकसामग्र्यामसत्यां च रक्षणव्यव-स्थायां दम्भोलिदृढमपि वस्तु क्रमादस्तमुपेयादेवेति । बौद्धकाले यवनकाले वा यदि कुमारिलभट्टप्रभृतयो दार्शनिकचूडामणयो मनस्विनो नाविरभविष्यन्, दुस्सहपराक्रमपराजितपरस्सहस्रपरा-नीकाः शिववीरादयो भूपतिप्रवरा न प्रादुरभविष्यन्, प्राणांस्तृ-णाय मत्वा यदि प्रतीकारातिरेकं नाकरिष्यंस्तर्हि सनातनधर्मः कां वा दशामन्वभविष्यदिति कल्पनाऽपि दुःसहतामापद्यते । परं साम्प्रतं सर्वतोदिशं प्रसृमराभिर्नैकविधविपज्ज्वालावलीभिराली-ढोऽयं सनातनधर्मः । वृकोऽजमिवार्यसमाजः कवलयितुमभिल-षति सनातनधर्मम् । ब्रह्मराक्षस इव ब्रह्मसमाजो बुभुक्षत्यमुम् । भक्षयितुमपेक्षते पाश्चात्यशिक्षणसहजसंस्कारः । समूलमेव घात-

यितुमातुरतामावहति जातिनीतितोडकसंस्था। चिकीर्तिषत्यसिधारेव सुधारकधौरेयदुस्साहसिकापिशाचिका। मर्माणि कृन्तन्ति महात्मानः। शर्मावलुम्पन्ति धर्मात्मानः। गलं निष्पेषयन्ति मानधनेष्वेव दृष्टिविन्यासिनः सन्यासिनः। अधर्मदावानलेऽस्य धर्मस्य होतारो भवन्ति नेतारः। ईदृशेऽपि दुःसहतरे प्रसङ्गे यदि धर्मैकप्राणा विद्वांसो भजेरन्नौदास्यं तर्हि नूनमचिरादेव सनातनधर्मः स्मरणीयां दशामापद्येत। ऐहिकमखिलं सुखं त्यागानले हुत्वा यः पुरा द्विजन्मभिः परिपालितः, यश्च प्राणपणैरपि पूर्वं पार्थिवैरभिरक्षितः सोऽयमधुनातनानां विबुधानां केवलमुदासीनवृत्त्या विलयमिदानीमुपैष्यति स धर्मः। अधुनाऽपि नातिक्रान्तः समयः। यदि चौदास्यमुदास्य जागृता भवेयुर्भारतीया भव्यकांक्षिणः सूरयस्तदा पुनरपि पूर्ववदेव देवसम्मतः सनातनधर्मः समुज्वलः प्रकाशयेदात्मनः प्रभुताम्। न चेद्विनस्यन्नयं धर्मः सर्वमेव सर्वसहावलयं विलयास्पदतामापादयेदसंशयमेव।

**'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।'**

विदुषां दूषणीयेनौदासीन्येनैव शारदाशासनशरासनपराहतो बभूव सनातनधर्मः। पतितमपि अस्पृश्यताशासनं कन्दुकवत्पुनर्वेगेन समुत्पत्य प्रहर्तुमुद्युंक्ते धर्ममास्माकीनम्। शासननिर्माणसदसि नातिचिरादधिगतप्रवेशं मिश्रविवाहशासनं निर्णेष्यमाणमनादिसिद्धां चातुर्वर्ण्यव्यवस्थामेव समूलमुत्पाटयेदिति बिभेति चेतः। परिस्थितिमेतादृशीं परमभयावहां न विचारयंत्येव प्राच्यविद्याविचक्षणाः। विचारयन्तोऽपि किं कर्तव्यतामोढयेन वा उत्साहवैकल्येन वा "सुखं च मे शयनं च मे" इति न्यायेन स्वार्थैकपरायणतया वा प्रतीकारपङमुखाः कुणपा इव चलनवलनलेशविधुरा अवहेलनामनुभवन्ति सर्वत्र। प्रतिपक्षिणः कियता

समुत्साहेन धर्मविध्वंसनकार्ये व्याप्रियन्ते । विचार्यताम् । संघटना कीदृशी कथं वा क्रियते । दृश्यताम् । प्रचारश्च कथं वाऽचर्यते । समालोच्यताम् । सांघिकी शक्तिः कथं वा प्रयुज्यते । निरीक्ष्यताम् । आक्रमणक्रमः परिक्ष्यतां समाजचित्तावर्जनरीतिरालोक्यताम् । वंचनाचातुर्यमन्वीक्ष्यताम् । अङ्गीकृतकार्यनिष्ठा दृष्टिपथे निक्षिप्यताम् । प्रतिपक्षिपराहतिप्रकारः परिचीयताम् । अविश्रमश्चोद्यमो निशाम्यताम् । सम्भाषणकला परीक्ष्यताम् । लेखनशैली परिशील्यताम् । वृत्तपत्रव्यवसायोऽवश्यं विविच्यताम् । बुद्धिभ्रंशनपरिपाटी च पटुदृशो गोचरीक्रियताम् ! निराधारविवेचनपद्धतिरद्धा बुद्ध्यताम् । वागाडम्बरसरणिः स्मर्यताम् । उत्कटतरश्चाकचक्याटोपश्च कटाक्ष्यताम् । निसर्गविरुद्धसाहसं सहासं परामृश्यताम् । मिथश्चैकमत्यसमुत्पादनपथः अनुसन्धीयताम् । मानापमानसमानता चावगम्यताम् । लज्जाशिथिलता च साधु ज्ञायताम् । ईदृशैरवश्यमेवानुकरणीयैः स्वकार्यसाधनचणैर्गुणैः सिद्धिमचिरादेव लभन्ते ते धर्मविरोधिनः । परं धर्मप्रणयिषु पण्डितेषु नैकोऽपि गुणः परिस्फुरति साम्प्रतमिति सविषादं निवेदयामः । स्वार्थैकप्रवणतया खिलीकृतो धर्मकार्योत्साहभरः । मत्सरकटुतया त्रुटिता संघटना । कूपमण्डूकवृत्तितया विलुप्ता प्रचारकल्पना । परोत्कर्षासहिष्णुतया समुल्लंघिता सांघिकी शक्तिः । उदासवृत्तितया कुंठितश्चाक्रमणक्रमः । विक्षिप्तप्रकृतितया सुदूरमुत्क्षिप्तः समाजचित्तावर्जनविचारः । आत्मप्रत्ययास्पष्टतया विनष्टा कर्तव्यनिष्ठा । अनुयायिजनानवलम्बतया भृशमपसारिता विरोधिपराभवाशा । अलसबहुलतया विकलीकृतश्चोद्यमप्रसरः । मौनस्वभावतया नाभ्यस्ता व्याहाररीतिः । लेखनीप्रभावानभिज्ञतया नैव स्वायत्ती-

कृता लेखनशैली । प्रचलितविषयज्ञानशून्यतया नाश्रितः सृष्टिमन्यथाकर्तुं समर्थः वृत्तपत्रव्यवसायः। एकाङ्गशिक्षणतया नाधिगता विषयप्रतिपादनसरणिः। विविधविषयापरिचिततया एकान्तवर्तितया च नाधिगतं सभासु गौरवम्। परार्थे कष्टासहनतया धृतिविरहिततया त्यागानुन्मुखतया च नासादिता समाजविश्वासपात्रता अमीभिर्महामान्यैरपि मेधाविमूर्धमणिभिरपि प्राच्यविद्याविशारदैर्धर्मप्रणयिभिः । एवमुपरिनिर्दिष्टगुणवैमुख्येन दुर्बलायिताः पण्डिताः स्वधर्मरक्षणायाशक्नुवाना मन्त्रौषधिरुद्धवीर्या नागपुङ्गवा इवांतस्ताम्यन्ति नितान्तम्। किमनया वृथा तान्त्या क्लान्त्या च। नानया सिद्ध्यति समीहितम्। नैव धर्मश्चोदेष्यति। सकलसाधनस्वायत्तीकरणेन सम्पादितधनजनबलाः सनातनधर्मानुयायिनो यदि यतेरंस्तर्हि न कालविलंबो भूयाद्धर्मोन्नतेः।

अयि विद्वांसः किमधुनाऽपि चक्षुरुन्मील्यते। किं सर्वस्वविनाशदीक्षिता गाढनिद्रैव सुखहेतुरिति आश्रीयते सादरम्। समुपागतः परीक्षासमयः सम्प्रतिः वः सत्वस्य । जीवनमरणसन्धिरयं कालः । संघटनया यदि समये प्रतीकारः क्रियेत तर्हि भूयास्त सधर्माश्चिरजीविनः। यदि पुनस्तन्द्रालुतया विरतव्यापारास्तदा नूनमयमेव चरमः समयो व इति बाढमवबुध्यताम्। प्रतियुगं धर्मसंस्थापनायावतितीर्षुर्भगवान्भार्गवीभागधेयं श्रीपार्थसारथिरनुगृण्हातु वः शुभां शेमुषीमिति प्रार्थयामः श्रद्धाविनताः।

मधुरवाण्याः भूतपूर्वा अपि अभूतपूर्वाः सम्पादकाः

**श्री. रामाचार्याः गलगली, बेळगांव**

# दैवीमीमांसा

**पं. एस्. व्ही. भीमभट्टः,** वेदान्तप्राचीननवीनन्यायविद्वान्
अध्यापकः चामराजेंद्र संस्कृत कालेज, बेंगळूरु.

मानवसमाजोऽयमहर्निशं सुखमेव मे स्याद्दुःखं मनागपि माभूदितीच्छति। दुःखामिश्रितसुखप्राप्तये तेन प्रज्ञाबलेनानेकानि साधनान्याविरकारिषत। परन्तु मानुषाणां दुःखसम्पर्करहितसुखप्राप्तियत्नः, एतावत्पर्यन्तं नापूर्यत। सुखसाधनतया यानि प्रतीतानि तान्येव कालान्तरे दुःखोपकरणतां अभजन्, भजन्ति च। तथाहि विज्ञानवेत्तॄणां, उच्चावचानि विज्ञानबलादाविष्कृतानि यंत्रमयाणि तदितराणि च साधनानि निरवधिकं निर्बाधं च शर्म न प्रयच्छन्तीति, न केवलं वैज्ञानिकेतरे, वैज्ञानिकधौरेया अप्यङ्गीकुर्वन्ति। प्रज्ञोपक्रान्तानि, धूमशकटवायुयानप्रभृतीनि नित्योपयोगिसुखसाधनानि, शत्रुनिर्मूलननिदानानि अणु'हैड्रोजनबम'प्रभृतीनि शस्त्रास्त्राणि च दर्शं दर्शं, यावदेते निर्मातारः, तद्बुद्धिबलसाचिव्यपरिकर्मिता राष्ट्रनायकाश्च समदृप्यन्, तावदेव भूकम्पानावृष्टि, प्रकम्पनाकस्मिकहृदयस्तम्भन, विचित्रतर-नवनवरोगोत्पत्तिप्रभृतय उपद्रवा अशक्यप्रतीकारा इव उज्जृम्भन्ते, सर्वेषमपि विवेकिनां पुरतः नूतनसमस्यां निर्मिमते च। एतैरनन्यविवर्तनीयैर्व्यापारैः सर्वोऽपि ज्ञानिवर्गः, भूवलयवर्तिमानुषसमुदयस्य संहतबौद्धिक-शारीरिक-यान्त्रिक-शक्त्यपेक्षया बहूर्जितानेकगुणितशक्तिमत् विश्वव्यापारप्रेरकं स्थितिकर्तृ संहर्तृ च, किंचिन्महद्भूतं अवश्यमव्यक्तमास्त इति प्रत्येतुं विवशतया सन्नद्ध इव भवति।

तदिदं परमात्मादिपदव्यपदेश्यं तत्त्वं भारतीयदर्शनकारैर्बहुधा विचारितम्। परमात्मनः स्वरूपं विशेषतः शास्त्रैक-

समधिगम्यमिति व्यवस्थापितम् । सामान्यमानवरचितेषु शास्त्रेषु भ्रमप्रमादादिमूलकदोषाणां सम्भावितत्तया सार्वज्ञादिमत्प्रणीतमेव शास्त्रं सार्वत्रिकहितप्रेप्सुभिरवश्योपादेयम् । शास्त्रोक्तमार्गेण परमपुरुषाराधनमेव निःश्रेयसहेतुरिति शास्त्रसिद्धांतः ।

प्रमाणभूतेषु च शास्त्रेषु श्रीवेदव्यासरचितं ब्रह्ममीमांसाशास्त्रं प्रधानतममस्ति । तदीयान्तेवासी जैमिनिः द्वादशाध्यायीमितं कर्ममीमांसाशास्त्रं प्रणिनाय । अनयोः पूर्वोत्तरमीमांसयोर्मध्ये मध्यमणिरिव मध्यमीमांसा-मध्यममीमांसा-देवशास्त्रादिपदव्यपदेश्यः दैवीमीमांसानाम्ना प्रथितः शास्त्रग्रन्थः प्रतिष्ठां लभते । अद्याप्यनुष्ठानपरा वैदिकाः ब्रह्मयज्ञनाम्नि पंचमहायज्ञान्यतमे यज्ञे 'ॐ अथातो दैवीमीमांसेति' तदीयमादिमं सूत्रं पठन्ति । अत एव दैवीमीमांसाशास्त्रं सर्वैराचार्यैः प्रमाणत्वेनाभ्युपगतमिति निश्चीयते । किन्तु तत्प्रतिपाद्यार्थविषये तत्तदाचार्याणामाशयभेद उपलक्ष्यते । तथाहि श्रीशङ्कराचार्याः देवताकाण्ड-सङ्कर्षणकाण्डप्रभृतिपदानि देवमीमांसाशास्त्रबुबोधयिषया तत्र तत्र प्रायुञ्जत । संकृष्यते द्वादशाध्याय्युक्तमेव संक्षिप्योच्यत इति संकर्षः देवताकाण्डमिति भामतीकारैः व्युत्पत्तिं प्रदर्श्य संकर्षशब्दः प्रबन्धपरतया निरदिश्यत । निबन्धृपरतयापि संकर्षसंकर्षणशब्दौ युज्येते इति ग्रन्थपर्यालोचनया प्रतीयते । प्रतिपाद्यविषयस्तु प्रातिस्विकतया कुत्रापि नोक्तः ।

श्रीकण्ठभाष्यशिवार्कमणिदीपिकाकारा अप्पय्यदीक्षितास्तु एवं वदन्ति ।। सङ्कर्षकाण्डः देवताविचारार्थं न प्रवृत्तः । किन्तु द्वादशलक्षण्यां पूर्वमीमांसायामविचारितेष्वनेकेषु विषयेषु न्यायव्युत्पादनार्थं प्रवृत्तः कश्चन प्रकीर्णकग्रन्थः सः । उपलब्धे सङ्कर्षकाण्डे अनुयजनीयमारभ्य विद्यते 'नान्यकालत्वाद्यथा याज्यासंप्रैषो

यथा याज्या संप्रैष' इत्यन्ते भागे देवताविषयकोपक्रमोपसंहारौ न मनागपि प्रतीयेते। अतः संकर्षकाण्डः संकर्षणकाण्डो वा केवलकर्मप्रतिपादको ग्रन्थ इति तेषामाशयः प्रतीयते। फलतः शङ्कराचार्याणामप्येष एवाशयो भवितुमर्हति। किन्तु संकर्षशब्दस्य देवताकाण्डपरतया व्युत्पत्तिप्रदर्शनं निर्विषयं भवति।

विशिष्टाद्वैतस्थापकाः श्रीरामानुजाचार्या अपि देवमीमांसाशास्त्रं सङ्कर्षणकाण्ड इति श्रीभाष्ये वेदांतदीपे च व्यवहरन्ति। सविष्णुराहहि, तं ब्रह्मेत्याचक्षते, इत्यन्योदाहृतसूत्रद्वयेन साकं अन्ते हरौ सिद्धत्वात्, नाना वा देवता पृथक्त्वात् तेषां पृथक् प्रदानमवदानैक्यात् इत्यन्यानपि त्रिचतुराणि सूत्राणि तत्र तत्र ते निर्दिशन्ति। प्रधानतया प्रतिपाद्यो विषयः देवतातत्त्वमिति प्रतिजानते च। शतदूषणीनामके ग्रन्थे देवतानां काष्ठा, अर्थात् उत्कर्षपरमावधिभूतो हरिः इति संकर्षकाण्डे प्रोक्तमिति लिखितम्।

किन्तु प्रणेतृविचारे मतभेदः प्रतिभाति। 'संकर्षः काशकृत्स्नप्रभव' इति वचनानुसारेण काशकृत्स्नः देवमीमांसाप्रणेता इति, जैमिनिरेव चतुर्लक्षण्या देवमीमांसाया अपि रचयिता इति मतद्वयमपि तद्ग्रन्थेषूपलभ्यते। कर्मदेवता ब्रह्मगोचरा सा त्रिधोद्भवौ सूत्रकारतः। जैमुनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्॥ इति तत्त्वरत्नाकरोक्तिः, प्रथममते मानम्। षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं जैमिनिकृतम्। अध्यायचतुष्टयात्मकं ब्रह्ममीमांसाशास्त्रं व्यासकृतं इति रामानुजीयानामेवान्यन्मतं आपस्तम्बश्रौतसूत्रभूमिकायां Govt. Oriental Library Publication Mysor) प्रतिपादितम्।

इदानीमुपलब्धः (काश्यां मुद्रितः) संकर्षकाण्डनामकः

सूत्रग्रन्थः जैमिनिरचितदेवमीमांसायाः कर्मभागमात्रप्रतिपादको भागः । देवतातत्त्वप्रतिपादकभागस्तु लुप्तोऽभूत् । किन्तु गुरु-शिष्यपरंपरया तत्प्रतिपाद्यविषयपरिज्ञानं कतीनांचित्सूत्राणामपि प्रचार आसीत् । (भूमिका, आपस्तम्बश्रौतसूत्रग्रन्थस्य) किंतु मीमांसका ईश्वरास्तित्ववादविरोधिनः, तत्रापि तन्मतप्रवर्तको जैमिनिः देवतातत्त्वप्रतिपादकशास्त्रं कथं गणयेत्– इत्यनुयोग-स्येदमुत्तरं– जैमिनिः तदनुयायिनश्च देवता रूपवतीः, अङ्गी-कुर्वंत्येव । तत्र विप्रतिपत्तिरेव नास्ति । जैमिनिसूत्राणां सूक्ष्म-परिशीलनेनायमर्थः सम्यग् ज्ञातुं शक्यते । किंतु जैमिन्यनन्तरैः शबरस्वामिकुमारलप्रभृतिभिः दुराग्रहग्रस्तैर्वा, कर्मश्रद्धासंवर्धने-च्छुभिर्वा 'जैमिनिर्देवता नांगीकरोतीति' आरोपोऽकारि। वस्तुतो जैमिनेर्व्यासशिष्यस्य देवताङ्गीकर्तृतया देवताकाण्डस्य जैमिनि-रचितत्वे विरोधलेशोऽपि न पदमादधाति । एवं च व्यास-प्रणीतसूत्रसंदर्भेण सह विंशतिलक्षणं मीमांसाशास्त्रं एकार्थप्रति-पादकमिति रामानुजीया अभिप्रयन्ति । उपलभ्यमानसङ्कर्ष-काण्डस्य परिशीलनेन समग्रग्रन्थत्वं ज्ञायते । तत्र देवतातत्त्वप्रति-पादकभागः परं कथं विलुप्तः ? अध्यायचतुष्टयमध्ये देवता-तत्त्वविचारस्य संदर्भसूचनाः सूक्ष्मा अपि विद्यंते किं ? एवं एक-स्यैव शास्त्रस्य काशकृत्स्नप्रणीतत्वं, जैमिनिप्रणीतत्वं चेति द्वय-मपि युज्यते– 'इत्यादयोऽनुयोगाः परमवशिष्यन्ते ॥ '

श्रीमध्वाचार्याः ब्रह्मसूत्रानुव्याख्याननामके स्वग्रन्थे प्रथ-माधिकरणे 'ॐ अथातो ब्रह्मजिज्ञासेति' सूत्रघटकः ब्रह्मशब्दः विष्णुवाचक एवेति समर्थयन्तः एवं कथयन्ति स्म– ब्रह्मसूत्र-प्रणेता भगवान् वेदव्यासः ब्रह्ममीमांसातः पूर्वतने देवमीमांसा-ग्रन्थे विष्णुरेव ब्रह्मशब्दवाच्य इत्यवादीत् । स विष्णुराहहि,

तं ब्रह्मेत्याचक्षते' इत्युपसंहारस्थसूत्रद्वयं अत्रार्थे प्रमाणमस्ति। अस्या देवमीमांसाया आद्यन्तभागौ स्वयं वेदव्यासेन निरमायिषाताम्। मध्यभागः तदाज्ञया तदीयशिष्येण सङ्कर्षणापरनामक शेषेण पैलेन च रचितः। एवं च ब्रह्ममीमांसातः पूर्वतनदेवमीमांसायामेव ब्रह्मशब्दार्थो विष्णुरिति प्रमिततया ब्रह्ममीमांसाया उपक्रमे 'अथातो ब्रह्मजिज्ञासेति प्रथमसूत्रे निर्णीतार्थकब्रह्मशब्दमात्रं प्रयुज्य बादरायणः विष्णुरेव ब्रह्मशब्दप्रतिपाद्य इति समसूचयत्। इति ॥

महाभारततात्पर्यनिर्णयनाम्नि श्रीमध्वविरचिते ग्रन्थेऽपि देवशास्त्रविचारः प्रक्रांतः "सत्यवतीसूनुः देवमीमांसायाः आद्यन्तः भागौ स्वयं विरच्य मध्यभागनिर्माणे शेषपैलौ न्ययोजयदिति। (महाभारततात्पर्यनिर्णये नवमाध्यायः) तत्र शेषः पैलऋषिणा महदिदं कार्यं कारयितुं परमात्मनः निदेशानुसारेण तमाविशत्। साक्षात् शेषेण, तदाविष्टेन पैलेन चेति द्वाभ्यां दैवीमीमांसा विरचितेति ॥

पैलौडुलोमिवरजैमिनिकाशकृत्स्नकार्ष्णाजिनिप्रभृतिशिष्यसुसेव्यपाद– इति यदुपत्याचार्यविरचितकरावलम्बनस्तोत्रे पैलः व्यासशिष्येषु प्रथमतया कीर्तितः। शेषस्य सङ्कर्षणनाम्ना परमात्मना आविष्टतया सङ्कर्षणेत्यपि नामास्ति। देवक्युदरस्थितगर्भस्य रोहिण्युदरे कर्षणात् शेषावतारिणः बलरामस्यापि सङ्कर्षणनामवाच्यता प्रथिता वरीवर्ति। श्रीमध्वाचार्यैरपि गर्भसङ्कर्षणात् सङ्कर्षणः इति बलरामे प्रसिद्धस्य संकर्षणनाम्नः निर्वचनमकारि। कोशकारोऽमरसिंहोऽप्याह- संकर्षणः सीरपाणिः कालिन्दीभेदनो बल इति। अतोऽवतारूपेऽपि प्रसिद्धमिदं नाम मूलरूपे प्रयोगोचितमेव। एवं च संकर्षणनाम्ना शेषेण रचिततया

देवमीमांसायाः संकर्षणकाण्डमिति प्रचलितः व्यवहारोऽपि युज्यतेतराम् । 'अचेतनायोग्यासत्यानृतान्यनुपास्यानि अफलत्वविपर्ययाभ्याम्' इति सांकर्षणं सूत्रमिति जयतीर्थीयटीकायां देवमीमांसैव सांकर्षणसूत्रत्वेन व्यपदिष्टा ।

देवमीमांसेति नामानुसारेण ग्रन्थे मुख्यप्रतिपाद्यो विषयः देवतातत्त्वमेवेति निश्चीयते । संकृष्यते द्वादशाध्याय्युक्तमेव संक्षिप्योच्यत इति व्युत्पत्तिप्रदर्शनं नातीव युज्यते । किन्तु समग्रो ग्रन्थः, अद्ययावदनुपलब्ध एवेति तत्र विशिष्य प्रतिपाद्यविषयेऽप्रतिपत्तिमूढमनस एव वयमिति खेदेनावेदितव्यं भवति ।

अनन्तशयने मुद्रिते सर्वमतसंग्रहनामके ग्रन्थे देवमीमांसायाः प्रणेता व्यास इत्येवं मध्वाचार्याशयानुगुणमभिहितम् । (Mysore Maharaja's Sanskrit College Library No. 2688). आद्यन्तग्रन्थकर्तरि मध्यस्यापि निर्देशके सम्पूर्णग्रन्थकारत्वव्यपदेशः न्याय्य एवाभाति । ग्रन्थे वेदव्याससम्बन्धस्य सत्वात् मध्यभागप्रतिपाद्योऽपि विषयः तदभिमत एवेति निर्णेतुं प्रभूयते । संकर्षकाण्डनाम्ना कश्चन ग्रन्थः काशीनगरे मुद्रापित उपलभ्यते । तत्र चतुर्ष्वध्यायेषु जैमिनीयद्वादशाध्याय्यामविचारितानि प्रमेयाणि विचारितानि । तत्र अथातो दैवीमीमांसेति प्रथमं सूत्रं सविष्णुराहहि, तं ब्रह्मेत्याचक्षत इत्यन्तिमं च सूत्रद्वयं नोपलभ्यते । समग्रे ग्रन्थे देवताविचारः कुत्रापि न प्रस्तुतः । सूत्राणि च 'गणेषु' 'यस्यै' 'उदीते' इत्येवमतिसंक्षिप्तानि पूर्णसूत्रस्य प्रतीकग्रहणानीव वर्तन्ते । अतोऽस्य ग्रन्थस्य प्रामाणिकत्व एव संशीतिर्जायते । इममेव ग्रन्थं देवमीमांसाशास्त्रं मत्वा अप्पयदीक्षितप्रभृतयः तत्र देवतासम्बन्ध एव नास्ति, कर्ममीमांसाया एव शेषभूतं तच्छास्त्रमित्यादि लिलिखुः ।

देव मीमांसायाः प्रत्यध्यायप्रतिपाद्यविषयास्तु अनन्तशयने मुद्रिते प्रपंचहृदयग्रन्थे, रामानुजीये तत्त्वटीकानाम्नि च ग्रन्थे निर्दिष्टाः। प्रथमाध्याये मन्त्रविशेषाणां देवतातत्त्वप्रतिपादन एव परमं तात्पर्यमिति। द्वितीये विध्यर्थवादादिवेदशेषभागः देवताशेषभूत इति। तृतीये देवतानां स्वेच्छाविग्रहत्वप्रभृत्यलौकिकाः गुणाः सन्तीति, चतुर्थे तत्तद्देवतोपासनाजन्येन तत्तद्देवतानां अनुग्रहेण सालोक्यसारूप्यादयः मोक्षप्रकाराः भवन्ति भक्तानामिति, विषयाः प्रतिपादिताः। एते विषयाः प्रायः मध्वाचार्याणामप्यनुमता भवेयुरिति प्रतीमः। किन्तु प्रायः 'अन्या'नुदाहृतपूर्वोक्त 'अचेतनेत्यादिसूत्रोदाहरणात्, देवमीमांसेति शब्दस्वारस्याच्च दैवीमीमांसा सर्वथा तारतम्य, तत्स्वरूप, बल उपासनाक्रमादि प्रतिपादनपरा। कर्मविचारस्य तु तत्र आनुषङ्गिकतयापि प्रवेशो नास्ति। व्यासपैलासंकर्षणाः कर्तारः' इत्यवं श्री मध्वाचार्याशयः प्रतीयत इति शम्।

अल्पीयसामेव निवासभूमित्यागाद्विपत्तिर्महतां न जातु।
रत्नाकरात्सन्मणयोऽभियान्ति राज्ञां शिरः काकमुखानि भेकाः॥
वसन्त्यरण्येषु चरन्ति दूर्वां पिबन्ति तोयान्यपरिग्रहाणि।
तथापि वध्या हरिणा नराणां को लोकमाराधयितु समर्थः॥
बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा।
गर्दभयानमसंस्कृतवाणी षट्सु नरो लघुतामुपयाति॥
दानं दरिद्रस्य विभोश्च शान्तिः यूनां तपो ज्ञानवतां च मौनम्।
इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं न यान्ति॥
शिरसा विधृता नित्यं तथा स्नेहेन पालिताः।
केशा अपि विरज्यन्ते निस्नेहाः किं न सेवका॥
अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः।
प्रवासरसिके कान्ते यथा साध्व्यास्तनोन्नतिः॥ –सुभाषितानि

  

# पं. श्रीविद्याधरशास्त्री एम्. ए.
# तदीयं हरनामामृतं महाकाव्यञ्च

(ले. नारायणशास्त्री काङ्कर:, जयपुरम्)

**कविपरिचयः—** पण्डितश्रीविद्याधरशास्त्री एम्. ए. महोदयः कस्य न सुपरिचितः ? स्वसंस्कृतसंस्कृत्योः परमस्नेही महाशयोऽयं निखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य प्रचारमन्त्री प्रांतीयराजस्थान संस्कृतसाहित्यसम्मेलनस्य च प्राणभूतो वरीवर्ति। श्रीमन्तः सुप्रसिद्धा भाष्याचार्याः श्री हरदत्तमहोदया हि अस्य पितामहा अवर्तन्त। विद्यावाचस्पति श्रीयुतदेवीप्रसादतनयोऽयं स्वयमपि साक्षाद् विद्यावाचस्पतिर् विद्यार्णवो विद्यारत्नमेव च विद्योतततेतमाम्। सांप्रतमेष पैतृकव्यवसायसंलग्नः डूंगर कॉलेजे संस्कृतविभागाध्यक्षपदे विराजमानो बीकानेरनगरमलङ्करोति।

निर्भयव्याख्यान-नैपुण्यम्, निःशङ्कलेखन-गाम्भीर्यम्, कोमलकविता-कौशल्यम्, प्राच्यार्वाच्योभयदेशविद्या-वैदुष्यम् इत्यादयो नान्यत्र प्राप्तशरणा गुणगणाः पण्डितभूषणमिममाश्रित्य निश्चिन्ततां तेनिरे। स्वभावेन सरलः, सदा स्मितमुखी, मधुरभाषी मनीषिरेष यदा संस्कृतसंस्कृत्योः सम्बन्धे सम्मेलन-सभासमित्यादिषु जागर्जीति तदा विपक्षिवर्गो न जाने कुत्र शृगालायते ? महाशयस्यास्य लेख-भाषण-कवितानां समाजे समानः समादरः।

**कविकृतयः—** हरनामामृतं, आनन्दमन्दाकिनी, सत्यसन्दोहिनी, मत्तलहरी, विक्रमाभ्युदयं, पूर्णानन्दं, कलिमलायनं, विद्याधरनीतिशतकं, लीलालहरी, इत्यादिनैकविध महाकाव्य-खण्डकाव्य-चम्पू-नाटक-नीति-स्तोत्राणां रचयिता सहृदयोऽयं सुधी

निजधारावाहिलेखन्या अनवरतं सांस्कृतसाहित्यकोषं संवर्धयन् लोकान् महदुपकरोतीति धन्यधन्या: स्मो वयम् ।

नास्त्यत्र विशेषावकाशोऽस्य समस्तकृतिजातं समीक्षितुम्। केवलं 'हरनामामृतं' विपश्चिद्वाचकेभ्य: किंचित् पाययित्वा सन्तोषं भजामहे ।

षोडशसर्गात्मकेऽस्मिन् महाकाव्ये कविकर्मकुशलेनैतेन कृतिना निजपूज्यपितामहश्रीहरदत्तभाष्याचार्याणां नैपुण्येन निगुम्फितं पावनतमं जीवनचरितं विद्योततेतमाम् ।

**संस्कृतसंस्कृतिसन्देशः—**

एकांशोऽपि क्वचित् कश्चित्, नास्ते यस्यां निरर्थकः ।
वाक् सेयं संस्कृता साक्षात्, सर्वशुक्ला सरस्वती ॥ (१५।५०)
भाषेयं सर्वभाषाणां, संस्कृतीनां च भूतले ।
मान्या मान्यतमा नित्या, देवलोकेऽपि पूज्यते ॥ (१५।७७)
कीदृशीयमहो विश्वी, नित्या संस्कृतभारती ।
यत्र संकीर्णतावृत्त्यै, नावकाशोऽस्ति कश्चन ॥ (१५।७८)
त्रिलोकव्यापिनी यस्याः, संस्कृतिर्विश्वबोधिनी ।
संस्कृते संस्कृतिः शुद्धा, विकृतिः संस्कृते कुतः ।
सर्वशुद्धोज्ज्वले रत्ने, कुतो रेखा मलीयसी ॥ (१५।४८)
सर्वे स्युः संस्कृतात्मानः, सर्वे संस्कृतबुद्धयः ।
कर्ता एकोऽपि लोकेऽस्मिन्, न च तिष्ठेदसंस्कृतः ॥ (१५।८३)
लोके मे साम्यमिच्छन्ति, संस्कृतं तैः प्रयुज्यताम् ॥ (१५।५५)

**कवेरनुभूतयः—** महाकाव्येऽस्मिन् कृतिनः कवेर्लोकानुभूतयः पदे पदे सूक्तिरूपे प्रयुक्ता विचित्रां चमत्कृतिं समुत्पादयंति। कृपय एताश्चापि काश्चन विलोकनीयाः—

"रुद्धा न वाचां गतिः ।" निजात्मने किं बहुजल्पनीयम् । फलेन्न किंचित् समयात् पुरस्तात् । शक्तिर्हि शक्ति तरसाभियाति । बलीयसी केवलमीश्वरेच्छा । विवेकशक्तेर्नहि कापि सीमा, शरीरशक्तिर्ह्रसते क्रमेण । सर्वात्मना कर्मरतस्य लोके चित्तं

  

न शोकादभिभूतमेति । तृप्तिर्विधेया क्षुधितस्य पूर्वं किं तर्पणं तृप्ततमस्य लोके । मरुस्थले यत् पृषदोऽपि मूल्यं धाराधरस्यापि न तत् समुद्रे । धर्मं विनार्थो न धनं विषं तत् । मनः प्रवृत्तिर्हि विनोदशीला । नवा नवाः के न विभान्ति भावाः । इत्यादि ।

आत्मनिवेदनम्:— कवेरस्य लेखशैली सरलसरला, ललितललिता, मधुरमधुरा, नूतनभावभरिता अनुकरणीया च वरीवर्ति । अस्मत्स्वतन्त्रदेशस्य शिक्षार्थिनो ये हि निःसन्देहं भाविशासकाः सन्ति, तेषां हस्तेष्वेतादृशं पुस्तकरत्नं प्रदीयेत चेत्, मन्ये, नूनमवश्यं ते सच्चारित्र्यसम्पन्नाः स्वदेशभक्ताः, स्वकर्तव्यविदो विश्वोपकारिणश्च सुनागरिका बोभूयुः । शिक्षाविभागाधिकारिणोऽत्र वयं सानुरोधं सङ्केतयामः । अस्माकं प्रेयसः पाठकांश्चापि सकृदिदं काव्यमध्येतुमामन्त्रयामः । कविरयं काव्यानन्दान्दोलितं विदधातु सर्वं जनमिति तथानुग्रहाय परमपितृपरमात्मानं प्रार्थयामहे च पुनःपुनः ।

---

## "वाणी कृपाणीह ते" समस्यापूर्तयः

कालीदासमुखैः समादृतचरीं नानाविपश्चिद्वरैः
आद्यां सर्वगिरां सुधारससमां गीर्वाणवाणीमिमाम् ।
त्वं ब्रूषे यदि तां मृतामरसिक त्वां किं वयं ब्रूमहे
साऽस्माकं हृदयानि कृन्ततितमां वाणी कृपाणीह ते ॥

नेत्रासेचनकं पुरी भुवि महाराष्ट्राभिधानस्य या
देशस्याभरणं परं सुविदिता मुम्बाश्रितानां नृणाम् ।
जीवातुः पृथगस्ति सेति भणिता या मन्त्रिमुख्य त्वया
साऽस्माकं हृदयानि कृन्ततितमां वाणी कृपाणीह ते ॥

—काव्यभूषण, नरहर दामोदरशास्त्री सातारा

शुंभे रात्रिचरे जगद्भयकृते देवद्विषाणां वरे
धूम्राक्षादिमहासुरैश्च सहिते तस्मिन्निशुंभानुजे ।
देवा यज्ञभुजो बभूवुरभया सन्तो महान्तश्च ते
गन्धर्वा जगुरात्मभूसहचरी वाणी कृपाणीह ते ॥

**—सांबदीक्षित दामोदर उपाध्ये, गोकर्ण**

शर्वाण्यम्ब ! भवाम्बुराशितरणद्रोणी जगद्धारिणी
सर्वाम्नायवरागमादिविनुतिश्रेणी भवद्वेषिणी ।
पायान्मां कृपयाधुना च नितरामाशीश्शुभाकारिणी
भूयाद्दुष्कृतवीरुधां विदलने वाणी कृपाणीहते ॥

**—एस्. सुब्रह्मण्यदीक्षित, पुंगनूर**

वाणीबाणनिभा भवन्ति भुवने ये किं न ते दुर्जनाः
वाग्वीणाः प्रभवन्ति केचिदपरे ये किं न ते सज्जनाः ।
ये लोकं सुखयन्ति वाङ्मधुरया येऽन्ये तुदन्ति ध्रुवं
तेषु त्वं कतमोऽसि दुर्जनमणे वाणी कृपाणीहते ॥

**—पं. नन्दलालशर्मा तिवारी हरिभक्तिः**
**( बबाय राजस्थान )**

**सम्पादकस्य समस्यापूरकेषु सविनय सूचना**

अत्युत्साहभरेण समस्याः पूर्यंते नव्यकविभिः । परं तु तत्र भूयस्यः अशुद्धयः वाचकानां वैरस्यमुत्पादयन्ति । सदोषश्लोकानां प्रकटने सहृदयाः पण्डिताश्च कुप्येयुः । अप्रकटने तु पद्यप्रेषकाः विमनायेरन् । एवं उभयतः पाशारज्जुसन्दानितः किं करोतु सम्पादकः ? अतो निरवद्यानि पद्यानि प्रेषयितुं प्राथ्र्यन्ते नव्यकवयः ।

**अग्रिमाङ्के पूरणीया समस्या**

**"सन्तोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥"**

**पूर्त्यवधिरेतस्याः कार्तिकपूर्णिमान्तः ।**

  

# " मधुरवाणी जयतुतराम् "

ले:- वे. मोरेश्वर ग. उपाध्याय: ज्योतिषी इत्युपाव्ह: अर्गे (कारवार)

गते वैशाखमासस्य मधुरवाण्यां द्विकेऽब्दके ।
चिदस्वरैः शास्त्रिभिर्दत्तबहिरालापसंज्ञिनाम् ॥१॥
प्रश्नानामुत्तराण्यत्र यथामति विलिख्यते ।
उपाध्याय कुलोत्पन्नश्रीमोरेश्वर शर्मणा ॥२॥
कोऽयाचत् त्रिपदां स्थानं बलिभूपन्तु ? वामनः ।
कः पुष्परसग्राही ? मधुपोऽस्ति दिनंप्रति ॥१॥
को लोकचक्षुः ? तरणिः दिल्लीशः केन जीयते ?
शिवाजीति महाराज्ञा सङ्गोपत्रा हिंदुसंस्कृतिम् ॥२॥
को गुरुस्सर्वदेवानां ? वाणीशो जयतेतराम् ।
किमिच्छन्ति नृपास्सर्वे ? विजयस्सर्वदा रणे ॥३॥
किमिन्द्रियाणां प्राधान्यम् ? नयनं श्रेष्ठमिंद्रियम् ।
संबंधः कोऽस्य कृष्णस्य कंसो हि ? मातुलो भवेत् ॥४॥
राजनीत्यां पटुः कोऽस्ति ? शतनुर्धिषणो नृपः ।
को मतः कलिकवाहोऽस्ति ? तुरङ्गः कल्किभूषणः ॥५॥
प्रतिमध्याक्षरवर्णानां शब्दानामुत्तरस्यतु ।
संयोगेन भवेच्छब्दः मधुरवाणीजयत्विति ॥६॥

---

# सरस्वतीदेवी-वर्णनम्

ले. श्री. दीनानाथशास्त्री, सारस्वतः विद्यावागीशः, दिल्ली

सनातनधर्मिसंसारे प्रसिद्धां सरस्वतीं वादिनः सनातनधर्मिभिः कल्पितां मन्यन्ते; परं नैवमस्ति । वेदादिशास्त्रेषु तस्याः स्पष्टं वर्णनं समागच्छति प्रत्युत सनातनधर्मानुसारं तस्या विद्याबुद्ध्यादिप्रदानवर्णनमपि समागच्छति सास्त्रेषु । तथाच– 'मह्यं देवी सरस्वती' (अथर्व. ६।८९।३) अत्र सरस्वतीदेव्या नाम । 'शं सरस्वती सह धीभिरस्तु' (अथर्व. १९।११।२) अत्र सरस्वतीतो धियाः कल्याणस्य च प्रार्थना । 'सरस्वती वीरपत्नी धियं

धात्' (६।४९।७) 'सरस्वती साधयन्ती धियं नः' (२।३।८) इति ऋग्वेदसंहितामन्त्रयोस्तु सरस्वत्या धीदातृत्वं स्पष्टमुक्तम्। एवं 'प्राणोदेवी सरस्वती वाजेभिर्वाजिनीवति । धीनामवित्री अवतु। (ऋ.सं. ६।६१।१४) अत्रापि तथा। यद्यपि सरस्वती नदीविशेषोऽप्यस्ति वेदे; तथापि देवताविशेषोऽप्यस्ति । अत एव निरुक्ते सरस्वती देवताका मन्त्रा उभयपरकाः स्वीकृताः। तथाच– सरस्वतीत्येतस्य नदीवद्, देवतावच्च निगमा भवन्ति, (३।२३।३) तेन वेदानुसारमपि सरस्वती देवता (देवी) सिद्धा।

'मेधां मे देवी सरस्वती आदधातु' (पारस्करगृह्यसूत्रे २।४।७) अत्रतु अत्यंतस्पष्टता। श्रीदयानंदस्वामिनाप्ययं पारस्करमन्त्रः स्व 'संस्कारविधौ, वेदारम्भप्रकरणे ८९ पृष्ठे उद्धृतः, तेनानुमोदि एव। तदानीं ब्रह्मचारिणो मेधाया आवश्यकतावशाद् देवमुखाग्निद्वारा सरस्वतीदेव्या उपासना उपपद्यत एव। तदत्र कस्याश्चित् मानुषीस्त्रिया अग्रे नैषा प्रार्थना वादिजन विवक्षिता; किन्तु अग्नेरग्रे। तदीयं कारणं यद्-अग्निः सर्वदेवानां प्रतिनिधिरस्ति। तथा च 'अग्निर्वै सर्वा देवताः' शतपथे (३।४।१।१९) 'अग्निर्वै देवानां मुखम्, मुखत एव तद् देवान् प्रीणयति' (शांख्यायनब्राह्मणे ३।६) तदेतेन मानुषीस्त्रिया ग्रहणमपास्तम्।

एवं 'मेधां देवी सरस्वती' (आश्वलायन गृ. १।१५।२)। 'सरस्वतीं देवयन्तो हवन्ते, सरस्वतीमध्वरे तायमाने। सरस्वतीं सुकृतो हवन्ते' (अथर्व. १८।१।४१) इति सरस्वत्या आवाहनमपि प्रत्येककर्मणि वैदिकं सिद्धम्। 'यदा गार्हपत्यमसपर्यैत्, पूर्वमग्नि वधूरियम्। अधा सरस्वत्यै नारि! पितृभ्यश्च नमस्कुरु' (अ. १४।२।२०) अत्र पूर्वमग्नये, ततः सरस्वत्यै अपि वध्वा

  

विवाहसमये नमस्कार आदिष्टः । तेन देवीदेवेभ्यो नमस्कारोऽपि वैदिक एव सिध्यति ।

'प्र वाग्देवी ददातु नः । (यजु. ९।२९) वाग्देवीति सरस्वत्या नाम प्रसिद्धमेव सनातनधर्मिसंसारे । अत एव शतपथे प्रोक्तम्– 'वाग् वै सरस्वती' (५।२।२।१३) निघण्टावपि (२।११) सरस्वतीति वाङ्नाम । 'सरस्वती सरस्वतेभिरर्वाक्( ऋ. ७।२।८) इति वेदे सारस्वतवंशस्य बीजम् । एतदादिना स्पष्टं सिध्यति यद् ये सनातनधर्माणो धीप्राप्तये, वाक्सिद्धयै च सरस्वतीदेवीमुपासते, तेषां सा उपासना वेदादि शास्त्रमूलिकैव, न खल्वमूला । एतदादिकं ज्ञातुमस्मत्प्रकाशन'श्रीसनातनधर्मालोक'-ग्रन्थमालायाः स्थायिग्राहका भवन्तु ।

~~~~~~~~

## " श्रीगणेश-वन्दना "

निर्माता— पं. श्री घनश्यामचन्द्र शास्त्री " विद्यामार्तण्डः, विद्यारत्नम् "
प्रिन्सिपाल श्री ऋषिकुल सं. कालेज, लक्ष्मणगढ

गणेशं विघ्नहर्तारं भजेऽहं सिद्धिदातारम् ॥ ध्रुवम् ॥

प्रशान्तं वारणेन्द्रास्यं, चतुर्बाहुं त्रिलोकीशम् ।
त्रिनेत्रं शोभिभालेन्दुं नमाम्यानन्ददातारम् ॥१॥ गणेशं ॥

सुसेव्यं सिद्धयोगीन्द्रैर्नरैर्लेखैश्च दैतेयैः ।
मृडानीसम्भवं नौमि, प्रतीक्ष्यं दुःखहर्तारम् ॥२॥ गणेशं ॥

विवाहे सर्वकार्ये यः, सुराणामग्रपूजायाम् ।
परिक्रम्योत्तमं रामं, पदं लेभेऽसुदातारम् ॥३॥ गणेशं ॥

सिताङ्गं श्वेतवस्त्राढ्यं सितैर्गन्धैः सुमैश्चाप्तम् ।
स्थितं सिंहासने रात्नं, स्तवीम्यामोदकर्तारम् ॥४॥ गणेशं ॥

महातुन्दं समाराध्यं प्रियाखुं वाहनं दधतम् ।
घनश्यामोऽर्चति प्रेम्णा जगत् कल्याणकर्तारम् ॥५॥ गणेशं ॥

~~~~~~~~

 

# हन्त ! कुसुमोत्करे कुलिशपातः

पुण्यपत्तने डेक्कनकालेज डिक्षणरीविभागे प्रायश्चतुरो हाय-नानुपसंस्कर्तृ (असिस्टेंट एडिटर्पदवीमूढवन्तः श्रीयुत व्हि. ए. रामस्वामिशास्त्रिणः प्रगते १९-८-५६ दिने रविवासरे नक्तं स्वकीयं भौतिकं वपुः परित्यज्य परेण महसा संयुयुजिरे इति वार्तेयं समग्रस्य विद्वन्निकुरम्बस्य चेतो नितांतं संतापयति। शास्त्रि-वराणां प्राच्यप्रतीच्यमार्गद्वयानुसारिपांडित्यं सुप्रसिद्धमासीत् । मीमांसासाहित्यवेदान्तादिशास्त्रेषु लब्धवैचक्षण्याः क्रमेणांग्ल-विद्यामप्यधीत्य एम्. ए. पदवीं प्राप्ता बंहिष्ठान् छात्रानध्याप्य सुबहूंश्च ग्रन्थान्प्राणैषुः। अण्णामलै विश्वविद्यालये त्रिवेन्द्रं राजकीयविश्वविद्यालये च पञ्चविंशतिं वत्सरान्प्राध्यापकपदवी-मवाक्षुः । सुबहूंश्चामूल्यग्रन्थानमुद्रितपूर्वान्प्राचीकशन् । सन्तत-विद्याव्यसनिनः इहत्य डिक्षणरीविभागे उपसंस्कर्तृपदे नियुक्ताः स्वकीयपाण्डित्यप्रदीपेन सर्वेषामपि संशयतिमिरं दूरत उत्सार-यामासुः। 'विद्या ददाति विनयमित्यस्य' उदाहरणभूताश्चासन्। सारल्यं त्वेषां नैसर्गिकं धनमासीत् । तिरुपतिक्षेत्रे विद्याचार-णाय दिग्दर्शक (डायरक्टर्) पदवीं प्रापिता अपि सर्वेषां दौ-र्भाग्येनेव मूर्तेन औदरिकरोगहतकेन पीडिताः कालेनापहृता इति महानयं दुर्नयो दैवस्य । विद्वद्बृन्दादेकममूल्यं रत्नमन्तर्हितम् । जीवात्मनोऽस्य शान्तिर्भूयात् । एतदीयजनानां पुरतः वयं हार्द-मनुतापं प्रदर्शयामः ।

इति **कृष्णमूर्तिशास्त्री**, डेक्कन कालेज, **पूना**

  

# काव्याध्वनि ध्वनेर्व्यङ्ग्यं प्राधान्यैकनिबन्धनम् ।

डॉ. के. कृष्णमूर्ति, एम्. ए., बी. टि, पीएच्. डि., क्यानरा कॉलेज, कुमटा.

रसश्चाभिव्यंग्य एव, न तु वाच्य इति व्यवस्थापितमानन्दवर्धनेन तद्यथा— वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः । न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम् । यत्राप्यस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते । न तु तत्कृता । विषयांतरे तथा तस्या अदर्शनात् । न हि केवलशृंगारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्वप्रतीतिरस्ति । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्, न त्वभिधेयत्वं कथाञ्चित् ।

तथैव वस्तुध्वनेरपि वाच्याद्दूरं विभेदः । स हि कदाचिद्वाच्ये विधिरूपे स्वयं प्रतिषेधरूपो भवति । वाच्ये प्रतिषेधरूपे स्वयं विधिरूपोऽपि ।

एवमेव अलङ्कारध्वनिरपि वाच्यालङ्कारेभ्यो विभिन्नः । तदित्थं वस्त्वलङ्काररसात्मकतया त्रिरूपस्य प्रतीयमानार्थस्यैव काव्यात्मत्वं निर्णीतं सहृदयश्लाघ्यत्वात् । यदाह—

अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥

प्रतीयमानस्य चान्यभेददर्शनेऽपि रसभावमुखेनैवोपलक्षणं प्राधान्यात्—

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥

 

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥

इत्यादिना ग्रन्थसन्दर्भेण ।

**काव्ये रसादीनां प्राधान्यमुद्घोषितं ध्वनिकारेण यथा—**

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥

एवं च वस्त्वलंकाररसादित्रिरूपप्रभिन्नस्य ध्वनेः यत्र काव्ये प्राधान्येनावस्थानं तत्रैव ध्वनिकाव्यव्यवहारः प्रवर्तते इत्यपि प्रदर्शितम् । तथा हि—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥

इति ध्वनिकाव्यलक्षणमुक्तम् ।

व्यङ्ग्यस्य च वस्त्वादिकस्य यत्र न प्राधान्यविवक्षा, तत्र ध्वनिव्यपदेशो नांगीकृतः । यथोक्तम्—

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥

व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥

उक्तं च तृतीयोद्द्योते—

काव्याध्वनि ध्वनेर्व्यङ्ग्यं प्राधान्यैकनिबन्धनम् ॥

इति । अस्य ध्वनिकाव्यस्य बहवो भेदाः प्रदर्शिताः ध्वन्यालोके ।

~~~~~~~~~~

**आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य च ।**
**सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा ॥**
**संत्यज्य शूर्पवद्दोषान् गुणान् गृण्हाति सज्जनः ।**
**दोषग्राही गुणत्यागी चालनीव हि दुर्जनः ॥**
~~~~~~~~~~

  

# श्रीरामभक्तः निषादः

श्रीरामः पितुः आज्ञापालनाय सीतालक्ष्मणाभ्यां सह दंडकारण्यं प्रतिष्ठते । अयोध्याराज्यस्य सीमान्तं यदा उपगच्छति तदा जन्मभूमेः विरहकल्पनया तस्य हृदयं दुःखितं भवति । स्वपूर्वपुरुषैः चिरादध्युषितां तां स्ववंशराजधानीं त्यक्त्वा अरण्यगमनप्रसङ्ग आगत इति विषीदति प्ररोदिति च लीलामानुषः स्वामी । "ततो रुधिरताम्राक्षो भुजमुद्यम्य दक्षिणं । अश्रुपूर्णमुखो दीनः" 'अयोध्याभिमुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत्' "आपृच्छे त्वां पुरिश्रेष्ठे काकुस्थपरिपालिते । पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह सङ्गतः ।"

अत्र रामः जननीमिव जन्मभूमिमपि सचेतनामिव आमन्त्रयति पुनर्दर्शनाय । एवं मार्गे स्वविरहकातरान् जनान् जानपदानपि आश्वास्य प्रणम्य आमन्त्र्य च कृच्छ्रात् पुरतः प्रस्थाय शृङ्गवेरपुरमुपगताः । तत्र च मार्गायासेन तदपेक्षया स्वजनानां विरहायासेन श्रान्तः क्लान्तः परिभ्रान्त इव च रामः तत्रैव इंगुदीवृक्षस्य समीपे रथं स्थापयितुं सुमन्त्रं आदिशति । तस्यां रात्रौ ते त्रयोऽपि राजकुमाराः तस्य महावृक्षस्यैव मूले गङ्गायाः कूले वासं कुर्वन्ति । तत्र जननी-जनकविरहेण क्लिश्यतः प्रथमैकान्तरात्रिं अतिवाहयतः स्नेहदरिद्रस्य श्रीरामस्य पुरस्तात् प्रेमपूर्णपात्रमिव जीवमित्रमिव उपस्थितो भवति निषादराजः गुहः । राज्यभ्रष्टः पित्रा विवासितः राजकुमारः रामः स्वराज्यसीम्नि सन्निहित इति श्रुत्वा तत्क्षणे तद्रात्रावेव गुहः स्वमन्त्रिवृद्धैः परिवारपुरोहितादिभिश्च सहितः श्रीराममुपतिष्ठते । देशभ्रष्ट इति गुहस्य तस्मिन् न अनादरः किन्तु महार्हशय्यासु शयनोचिताः राजकुमाराः जनकराजनन्दनी च तरुतले नदीतटे कण्टकाकीर्णे

वनस्थल एव निरहारमुपविष्टा इति दृष्ट्वा दुःखितः आर्तश्च भवति। 'अहो कीदृशां कीदृशी कष्टकरी परिस्थितिः आगता इति व्यथया विव्हल एव च भवति। 'तमार्तः सम्परिष्वज्य गुहो राघवमब्रवीत्। यथायोध्या तथेयं ते राम किं करवाणि ते।' 'राम! अयोध्यातः निष्कासितोऽहमिति वृथा व्यथां मा कृथाः। इयं मम पुरी एव अयोध्येति भावय। इदं च सर्वमपि राज्यं न मम किन्तु तवैव। अद्यप्रभृति अस्य निषादराज्यस्य त्वमेव प्रभुः न अहम्। अद्यप्रभृति अहं न राजा किन्तु राजदूतः रामदूतः। रामः राजा गुहः रामदूतः। कृपया एतद्राज्यं स्वीकुरु। सम्यगिदं राज्यं शाधि" इति प्रार्थयते "स्वागतं ते महाबाहो तवेयमखिलामही। वरं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधि नः।" इत्यनेन श्लोकेन उदारगुहः। स्वयं राजेश्वरोऽपि श्रीरामगुणलुब्धः गुहः सर्वसमर्पणमेव कलयति।

## दैवी विचित्रा गतिः

यस्य राज्यस्य न्यायदृष्ट्या स्वयमुत्तमः अधिकारी स्वपितृभ्यामेव तस्माद् राज्याद् विभ्रंशः देशाच्च भ्रंशः एकतः। अन्यतश्च वनमार्गे अकस्मान्मिलितः विजातीयः विधर्मीयः अनाप्तः कश्चन नीचयोनिः राजा स्वस्य राज्यसर्वस्वमपि कृष्णार्पणबुद्धया रामार्पणं करोति। तत्र आप्ता अपि अनाप्ता वैरिणः। अत्र अपरिचिता अपि आप्ततमा भवन्तीति विस्मित एव भवति रामः। स्वस्य सर्वस्वमपि रामहोमं विधाय 'यथायोध्या तथेयं ते' इत्युक्त्वापि ततोऽपि अपरितुष्य राज्यसर्वस्वं दत्वापि किमपि अददानः इव किमपि रामस्य उपकारं अकृतवानिव गुहः पृच्छति रामं 'राम किं करवाणि ते' इति। अहो भक्तिः अहो प्रेम च निषादराजस्य।

  

स्वराज्यं श्रीरामाय समर्पयित्वा गुहः 'नाहं युवराजो वा राजबन्धुर्वा बुभूषामि। यतः राजसम्बन्धिभ्यः कदाचित् भरतादिव, कैकेय्या इव, दशरथादिव वा राज्यापहरणशङ्कापि ते मा भूत्। तदर्थं अहं निश्शङ्कस्थानं ते दौत्यमात्रं वृणे इति स्पष्टमाह 'वयं प्रेष्या भवान् भर्ता' इत्यनेन। तथात्र अयोध्यायामिव कैकेयीसदृश्यः कुमातरः, तादृशकुभार्याकामुकतया भवादृशपुत्ररत्नानि विवासयन्तः दशरथसदृशाः पितरो वा नास्माकं राज्ये वर्तन्त इति अभयाश्वासनं प्रयच्छन्निव साभिमानं वदति गुहः 'साधुराज्यं प्रशाधि नः' (अस्मद्राज्यं सर्वथा साधुजनैरेव आपूरितं रामराज्यम्) इत्यनेन।

एवं तमतिथिं श्रीरामचन्द्रं स्वराज्यसमर्पणेन संतोषयित्वा 'एते राजकुमाराः वन्यमाहारं नार्हन्तीति' करुणया 'भक्ष्यं भोज्यं च पेयं च लेह्यं चेदमुपस्थितं। ततो गुणवदन्नाद्यं उपादाय पृथग्विधं। अर्घ्यं चोपानयत् क्षिप्रं वाक्यं चेदमुवाच ह" ।। सर्वविधमपि मृष्टान्नमुपकल्पयति। अत्र गुहः रामलक्ष्मणौ वने न केवलं मित्रवदुपचरति किन्तु मातृवदेव विविधपक्वान्नैः उपचिचरिषति। निषादस्य निर्व्याजवात्सल्यं राम परिसेवनेनैव नैव विश्राम्यति। तेषां राजकुटुम्बीयानां समीचीनभोजनानन्तरं महार्हशय्यासनादीन्यपि निवेदयति। रामदूतानां रामसूतानां रामवाहानां गजाश्वानामपि आहारं सिद्धमुपकल्पयति रामनिष्ठः गुहः। 'शयनानि च मुख्यानि वाजिनां खादनं च ते।'

सत्यमनेन निर्व्याजस्नेहेन निरतिशयेन वात्सल्येन च रामभद्रः सुतरां हृतहृदयः तुष्टमनाः तृप्तान्तरश्चाभवत्।

**"अर्चिताश्चैव हृष्टाश्च भवता सर्वथा वयम्"**

इति कण्ठरवेणैव स्वस्य मनस्तृप्तिं सानन्दं संसूचयति। गुहेन

आनीतं खाद्यं पेयं वा मुनिधर्मं अनुस्मरन् रामः लक्ष्मणो वा नैव स्पृशति । रामः तृषितोऽपि लक्ष्मणेन आहृतमेव जलं पिबति 'जलमेवाददे भोज्यं लक्ष्मणेन हृतं स्वयं' नतु गुहस्पृष्टम् । अथापि गुहः न किञ्चिदपि विमनायते । स्वानीतखाद्यपेयादीनि असेव्यमानेऽपि स्वधर्मप्रवणे रामे एकान्तभक्तस्य गुहस्य नैव विरागता वैरस्यं वितुष्टिर्वा । स्वकल्पितां मृदुतरशय्यां विहाय भूमौ एव यदा रामः शेते तदा सः लक्ष्मणस्य समीपमुपसृत्य प्रणयभरेण वात्सल्यरसेन च आपूरितः सस्नेहमिदमाह–

"इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां राजपुत्र यथासुखम् ॥"

परं रामनिष्ठः लक्ष्मणः कथं वा तादृशीं सुखशय्याम् अधिशयीत! वृक्षमूले दरिद्रदम्पतीव शयानौ सीतारामौ पश्यन् आप्रभातं रोरुदीति करुणं च विलालपीति मृदुहृदयः लक्ष्मणः । अस्मिन् सन्दर्भे गुहः स्वसमानभक्तिभावोपेतस्य लक्ष्मणस्य पुरतः स्वहृदयगतं रामप्रेम सशपथमुद्घोषयति ।

"नहि रामात् प्रियतरो ममास्ति भुवि कश्चन ।
ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे ॥"

अत एव श्रीरामः तं गुहं स्वभक्तश्रेणीतः उद्गमय्य मित्रकोट्यां प्रवेशयति । स्वस्य रावणविजयवार्तां भरतादपि पूर्वं गुहाय निवेदयितुं आदिशति हनुमन्तं रामचन्द्रः–

"शृङ्गवेरपुरं प्राप्य गुहं गहनगोचरम् । निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥ श्रुत्वा मां कुशलिनमरोगं विगतज्वरं । भविष्यति गुहः प्रीतः स ममात्मसमः सखा ॥"

अत्र 'आत्मसमः सखा' इति इतरासाधारणं विशेषणं गुहायैव प्रदत्तम् । नेदृशं गौरवास्पदं पदं प्रतिष्ठां वा सुग्रीवो वा विभीषणो वा एवं लभते । तत्र कारणं तु स्फुटमेव दृश्यते । गुहः स्व-

  

राज्यं श्रीरामाय ससन्तोषं समर्पयति । परं विभीषणः सुग्रीवश्च रामादेव राज्यं इच्छंति । तयोः रामभक्तिः सकामा सकारणा च । परं गुहस्य तु निष्कामा निष्कारणा निष्कल्मषा च ऐकांतिकी भक्तिः । अत एव हनूमानपि रामाज्ञानुसारं अयोध्याभिगमन-समये प्रथमतः शृङ्गवेरपुरम् अवतीर्य गुहमुद्दिश्य—

"सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः ।
सहसीतः ससौमित्रिः स त्वां कुशलमब्रवीत् ॥"

इत्यत्र 'तव सखा' इत्यनेन श्रीरामसौहार्दं सानन्दमुद्घाट्य कुशलं निवेदयति । एवं जात्याऽधमोऽपि निषादः स्वभक्तिप्रभावेण सर्वस्वसमर्पणेन च अर्जुन इव आत्मसमः सुहृद् भवति श्रीरामस्य । अहो भक्तपराधीनता भगवतः । अहो भगवन्निष्ठा नीचयोनेरपि निषादस्य ।

---

## विशिष्टाङ्कविषये किञ्चित्

"तृणेन वात्येव तयानुगम्यते यया दिशा धावति वेधसः स्पृहा ॥"

'महाकाव्यमाधुरी'नामक एकः विशिष्टाङ्कः ग्रन्थरूपेण आविष्क्रियत' इति चिरादेव प्रतिज्ञातमासीदस्माभिः। परं के वयं प्रतिज्ञां कर्तुम् ! भवितव्यतैव भगवती बलवती च प्रभवति सर्वत्र । सर्वकारीय निर्वाचननामपट्टिकामुद्रणकर्मणि अखण्ड-द्वित्रमासान् सर्वेऽपि मुद्रणालया व्यापृता आसन् । तदवधौ दूरेस्तु विशिष्टाङ्ककथा परं सामान्यमासिकाङ्कानपि बहु प्रयत्यापि आविष्कर्तुं नैव प्राभवाम । यावत् तत्कार्यं पर्यवसन्नप्रायमभवत् तावद् देशे श्रीलोकमान्यटिलक शताब्दीमहोत्सवः प्रारब्धः । सर्वासु अपि भाषासु लोकमान्यानां जीवनदर्शन-राजकारण-चरित्रादिग्रन्थाः प्रकाशिताः । तदा बहव एव जनाः मधुरवाणीसंपादकमपि संस्कृते सुन्दरगद्यशैल्यां टिलकचरित्रं ग्रथितुं सुरभाषायाः

शेषं २९ पुटे

# ... रामायणमङ्गलमहोत्सवः ...

मधुरवाणी सम्पादकैः अत्र गदगनगरे एकवर्षपर्यन्तमविच्छिन्नं श्रीमद्वाल्मीकिरामायणप्रवचनं कृतम् । भाद्रपद शु. १४ अनन्तचतुर्दशीसुमुहूर्ते तस्य महाग्रन्थस्य मङ्गलमहोत्सवः महता उत्साहेन ससम्भ्रमसमारम्भं च समुदजृम्भत । तदानीं पौरप्रमुखैः इतर भाषासु नैकमानपत्राणि आचार्येभ्यः प्रदत्तानि । परं संस्कृतपत्रिकासंपादकेभ्यः संस्कृतभाषायामेव स्तुतिपरं आत्मगौरवं निवेदनीयमिति निर्धार्य मयेदं पद्यपञ्चकं सद्य एव निरमायि । अवसरपठितत्वात् प्रथमप्रयत्नत्वाच्च सहजतया परिस्फुरन्तोऽपि प्रमादाः सदयैः सहृदयैः क्षम्येरन्नेवेति विश्वस्य प्रकाश्यन्ते अधस्तात्—



### * प्रशस्तिपद्यपञ्चकम् *

कोविदः काव्यशास्त्रेषु द्वैततत्वविशारदः ।
पण्ढरीनाथ आचार्यस्तेजसा भातु भूतले ॥१॥

दक्षिणापथलोकस्थमहर्षिसदृशो धिया ।
पण्डितः पण्ढरीनाथो मेधया भाति भूतले ॥२॥

येन रामकथा प्रोक्ता नगरेश्वरसन्निधौ ।
रामानन्दसुधा प्राप्ता स जीयाद्वसुधातले ॥३॥

ब्रह्मसूत्रार्थवेत्ता च नित्यं हरिपरायणः ।
वाग्मी कूर्मतनूजोऽसौ जयताज्जगतीतले ॥४॥

या वाणी मधुरकल्याणी सदा स्थास्यति निश्चला ।
पण्ढरीनाथहृदये साऽऽल्हादयतु सज्जनान् ॥५॥

डॉ. हु. भी. कोण्णूर, गदग

  

इमां न्यूनतामपनोदयितुं च आगृण्हन्। संस्कृतज्ञैरपि यथाकाल-प्रबोधिभिर्भाव्यमिति भावनया मित्राणामाग्रहेण च परिवर्तितः सङ्कल्पः। महाकाव्यमाधुरीस्थाने शताधिकपृष्ठपरिमितः टिलक-चरित्रात्मकग्रन्थ एव प्रदेय इति निरधारि। तन्निर्धारानुसारं लिखितं महानुभावस्य दिव्यजीवनचरित्रम्। इयं अवसरपठिता वाणी। पञ्चदशदिनेष्वेव समग्रग्रन्थो विलिखितः। तस्य विशुद्धौ श्यामिकायां वा वाचका एव प्रमाणम्। चैत्रवैशाखाङ्कौ तु यथा-समयं आविष्कृतौ लब्धौ एव स्यातां सर्वैरपि। ज्येष्ठ-आषाढ-श्रावणमासानां संयुक्तसंचिकैव टिलकविशेषांकः इत्यवसेयं वाच-कैः। अयं च भाद्राङ्कः। दीपावलेः प्रागपि वा यदि सर्वैरपि ग्राहकैः शुल्कं प्रदीयेत तदा कार्तिकाङ्कः परिवर्धिताकारेण आवि-ष्कर्तुं शक्येत। नो चेन्न। 'तण्डुलप्रस्थमूलाः समारम्भाः। शुल्क-मूलाश्च पत्रिका' इति निवेदनमनावश्यकमेव सुज्ञवाचकानां। अने-न विशिष्टांकेन तृप्येयुरेव अस्मद्वाचकाः न पुनः कुप्येयुरिति वि-श्वसिमः। इतःपरं वयं न किमपि प्रतिजानीमः। फलानुमेयाः प्रारम्भा एव सविशेषप्रमोदाधायका भवेयुः। महाकाव्यांककृते लिखिता लेखाः पुरतः प्रत्यंकं प्रकाश्यन्त एवेति आश्वासयामः। नतु प्रतिजानीमः। येभ्यः चिरादेव धनं नैव लब्धं न तेभ्यः प्रेषि-तोऽयं विशिष्टांकः। तैः यद्यपेक्ष्येतायमंकः तदा वार्षिकशुल्कं मधुरवाण्याः तीव्रमेव प्रेषणीयम्। पुरस्ताच्च यथासमयं मधुर-वाणी आविष्क्रियेत अनुप्रेष्येत च अप्रमादेनेति निवेद्य विरम्यते।

—सम्पादकः

---

विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते।
फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति॥
काव्यस्याम्रफलस्यापि कोमलस्येतरस्य च।
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत्॥

Regd. No. B 7171



# दि गदग को-ऑपरेटिव्ह कॉटनसेल सोसायिटि लि., गदग

जैसे फल वैसे ही दाम होता है। लक्ष्मी कपासके बीजों को इस्तेमाल करके अधिक लाभ अुठाइये। जैसे बीज होते हैं वैसे फल भी होता है। बीज बोते समय विचार न करें तो मौसम के समय पछताना ही पडेगा!




**गमनार्ह प्रगति १९५०-५१**

४५०५० सुरक्षित निधि रू. १२४४६० इतर निधि रू. ११९९

१९५१—५२

त निधि रू १३३३०१ इतर निधि रू. १२९९

१९५२—५३

त निधि रू. १४५१८२ इतर निधि रू. १४६९

१९५३—५४

निधि रू १५७५५२ इतर निधि रू १६२

१९५४—५५

निधि रू. १७०५५२ इतर निधि रू. २३००

द्ध लक्ष्मी बिनौले बीज खरीदकर

भ अुठाइये!

**व मे ही कपास बेचकर ❀**

**अुठाकर भाग्यवान् बने !!**

. के. एच्. पाटील — श्री. एच्. पी. रायचूर
ानेजिंग डायरेक्टर — म्यानेजर

To. The Registrar.
Gurukula-University
Post: Gurukul, Kangri.
Dist: Shaharanpur

Hombali Printery, Gadag
Published by Pandharinathacharya
gali at Gadag.

पर्यायपीठाधीशश्रीविबुधेशतीर्थस्वामिपादानां कृपापोषिता

# मधुरवाणी

उडुपी श्रीकृष्णमठद्वारा संचालिता ।



रोषाद्रसात्परुषपाषाणतोऽनिलविशेषाश्वमारककटु-
भाषास्फुरद्युवतिभूषास्मणेः परिणिर्णीषाकुतूहलवशात् ॥
भ्रेषान्यवाग्जरठयोषादिनैकविधवेषाश्रयैकरसिकाऽ-
शेषाघदुःखदवशोषाय नोऽद्य भव शेषाद्रिभाग्य भगवन्! ॥

सम्पादकः प्रकाशकश्च

पं. पण्ढरीनाथाचार्यः गलगली

वार्षिकमूल्यम् (५) रूप्यपञ्चकम्

१९५६ अक्टोबर (आश्विन) मासस्य सञ्चिका गदग

## ❋ मधुरवाण्याः संचालकाः ❋



## —◻ विषयानुक्रमः ◻—



**अशुद्धिशोधनम्**— अन्योक्तिप्रथमपद्ये द्वितीयचरणे 'कन्यां मान्यरमणि' इत्यत्र रेफः आधिकः प्रमादात् पतितः । 'कन्यां मान्यमणि' इति वाचयन्तु । तथा सुभाषितेषु अष्टमं पद्यं 'वृश्चिको बिंदुमात्रेणवाध्व वहति कटकं' इति साधुसंशोध्य पठनीयम् ।

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया चिरावज्ञा मूर्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

द्वितीयवर्षे ]          श्री दुर्मुखिसं. आश्विनसञ्चिका          [ सप्तमोऽङ्कः

## मङ्गलाचरणम्

श्री-दाशीरमणीमणीकुटिलदृक्श्रेणीकुवेणी गुणा-
बद्धः स्निग्धविशुद्धसद्हृदवटे स्वच्छन्दसञ्चार्यपि ॥
पारावारगभीरवारिषु परं यो नो मिमानो महा-
मानो मीनतनुर्यमानविनुतो मीनातु चेतांसि नः ॥१॥

चञ्चत्काञ्चनकान्तिकान्तवपुषि श्रीशे झषाभाजुषि
चन्द्रश्चन्द्रभृदिन्द्रसत्यकमुखा वृन्दारकाः सेन्दिराः ॥
बद्धुं गर्हितदाशवेशसहिता लीलात्तजाला जले
सोऽहंपूर्विकमेव वारिधितटे तस्थुः प्रदत्तेक्षणाः ॥२॥

हत्वा यः श्रुतितस्करं च पुनराहृत्य स्वयंभूगिरः
चक्रेऽष्ट श्रुतिमेनमम्बुजभुवं भूयोऽप्यनष्टश्रुतिम् ॥
यश्चाष्टापदभास्वरोऽपि वपुषा नष्टापदालिः सतां
प्रेष्ठः प्रोष्ठतनुः क्रियाष्ट भगवान् तुष्टीष्टिपुष्टीश्च नः ॥३॥

## मासावतरणिका

स्वाहाकर्तुमिवाश्विनेऽखिलमहीमीहाकुलाऽहो जलैः
ऊहातीतरयेण वर्षति पयोवाहावली सन्ततम् ॥
गेहान्यद्य पतन्ति धावति जनो देहात्मगुप्त्यै बहिः
हाहाकार उदेति दिक्षु परितो नेहाऽद्य शान्तिः क्वचित् ॥१॥

# अन्योक्तयः

नूनं सन्ति महान्ति सन्ति महसा भास्वन्ति रत्नानि ते
कन्यां मान्यरमणिं प्रदाय हरये धन्यो वदान्योऽसि च ॥
किन्त्वात्यन्तिककान्तिकान्तरजनीकान्ते निशान्तोदिते
पुत्रे क्षुभ्यसि हन्त सागर न ते श्लाघ्यं न योग्यं च तत् ॥१॥

मानं मुञ्च सुमौनमञ्च परभृत्! त्वं चापलं मा कृथाः
किंचोदञ्चति नाद्य पञ्चमरवो भिन्ना विपञ्ची तव ॥
कण्ठः कुण्ठित एव यद्यपि तवोत्कण्ठाऽस्ति घण्टापथे
त्वं चेद्गायसि सञ्चितं शरदि हा हन्येत मन्ये यशः ॥२॥

---

# सुभाषितानि

रक्तमांसमयः कायः स्त्रीणां स्पर्शसुखाय नः ।
तमेवाश्नन्ति सिंहाद्या रम्यं नास्तीह वस्तुतः ॥१॥

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
यासां, विश्वासपात्रत्वं ता गच्छन्ति स्त्रियः कथं? ॥२॥

दह्यमानोऽपि हृदये मृगाक्ष्या मन्मथाग्निना ।
स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥३॥

रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः ।
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥४॥

अल्पीयसैव पयसा यत्कुम्भः पूर्यते प्रसिद्धं तत् ।
ब्राह्मं तेजः पश्यत कुम्भोद्भूतः पपौ वार्धिम् ॥५॥

क वाम्भोधौ जन्म क्व च वपुरिदं कुंदधवलं
कचावासस्थानं कृतमहह विष्णोः करतलम् ।
क नीचानामास्ये परिणतिरियं चुम्बनविधौ
इतीवायं शंखः करुणकरुणं रोदिति मुहुः ॥६॥

मलोत्सर्गं गजेंद्रस्य मूर्ध्नि काकः करोति चेत् ।
कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥७॥

विषभारसहस्रेण गर्वं नायाति वासुकिः ।
वृश्चिको बिंदुमात्रेण ऊर्ध्वं वहति कण्टकम् ॥८॥

सम्पादकीयम्

# "भाषाराज्यानां भरतवाक्यम्"

स्वर्मान्यामरवाङ्मयस्य महितं मर्मावगत्याञ्जसा ।
धर्माज्ञावशगा भवन्तु सचिवा निर्मायिनश्च प्रजाः ॥
दुर्मार्गान् परिहृत्य शांतिसुखकृत्कर्माचरन्त्वन्वहं ।
निर्मायान्नवराष्ट्रनिर्मितिरियं शर्माणि नर्माणि वः ॥

बहूनामेव जनानां अद्य चिरंतनस्वप्नाः साकारतां प्राप्ताः। जनतायाः तीव्रतरां आकांक्षां स्व वैयक्तिकविरोधे सत्यपि पूरयित्वा प्रजाप्रभुत्वपद्धतेः शुद्धसम्प्रदायं अन्वसरन् पं. नेहरूप्रभृतयः वरिष्ठाधिकारिणः । तदर्थं सत्यमभिनंदामस्तमां भारतसर्वकारम् । इदानीं नवीनतमेन राष्ट्रविभागेन एकभाषिकाः एकविधसंस्कृतिमंतः सर्वे जनाः एकत्र एकछत्रछायायां एकीभावमापन्नाः । इतःपरं सर्वासामपि भाषाणां तत्तद्भाषाभाषिकाणां च सर्वतोमुखी प्रगतिः सत्वरं संसाधयितुं शक्यते । स्व-स्व मातृभाषाणां सर्वांगीणसमुन्नतिरपि स्वयं कर्तुं साध्यते । नेदानीं कर्णाटकभाषाभाषिणां कन्नडभाषाप्रोत्साहनाय महाराष्ट्रीयाणां, एवमेव महाराष्ट्रीयाणां गुर्जराणां, तेषां च पुनरन्येषां मुखावलोकनं वा प्रसादनं वा कर्तव्यं भवेत् । इदानीं कर्णाटकीयाः कन्नडं, महाराष्ट्रीयाः मराठीं, आंध्राः आंध्रीं, केरळाः केरळीं, अन्ये च अन्यान्याः स्वस्वभाषाः वर्धयितुं स्वतंत्रा एव । एकैकस्या भाषायाः एकैकं स्थानं इदानीं क्लृप्तमिव समभवत् । वंग्याः बंगालं हिंद्या उत्तरप्रदेशः, मराठ्या महाराष्ट्रं, इतरस्याश्च इतरत् अन्यस्या अन्यः प्रांतः प्रदेशो वा तैः दत्तः ताभिः लब्धः । परं सुरभारत्याः संस्कृतस्य को वा देशः प्रदत्तः को वा प्रांतः लब्धः ? न कोऽपि । भारतीयसंविधानेन मुख्यभारतीयभाषात्वेन परिगणिताभ्यः सर्वाभ्योऽपि भाषाभ्यः एकैको देशः प्रायः प्रदत्तः । परं संस्कृतस्य

देशोऽपि न दत्तः दृष्टिरपि न दत्ता। मूलं परित्यज्य बालस्यैवाद्य सर्वत्र प्रतिष्ठा समालोक्यते।

**अत्रेदं समाधानम्**

'को देशः संस्कृतस्य ?' इत्यस्य प्रश्नस्य 'स्वदेशो भुवनत्रयमि'त्येव उत्तरं भवितुमर्हति। यथा पिता प्रबुद्धेभ्यः स्वपुत्रेभ्यः स्वसर्वस्वं विभज्य वितीर्य किञ्चिदप्यनादायापि निष्किञ्चनोऽपि 'इदं सर्वं ममैवेति' उदारधिया स्वस्थचित्तः सानंदमास्ते तद्वत् सर्वभाषाणां मातृभूता संस्कृतभाषाऽपि स्वमूलानां सर्वभाषाणां पृथक् पृथक् प्रान्तलाभं दृष्ट्वा स्वयं प्रादेशमात्रमलब्ध्वापि सत्यं संतुष्यत्येव। ताश्च स्वसंततीः प्रांतीयभाषाः आशीराशिभिरनुगृण्हात्येव च। 'इतरासां भाषाणां एकैकप्रान्तलाभश्चेन्ममतु समग्रमेव राष्ट्रं लब्धम्। सर्वे प्रान्ता अपि ममैव भागधेयमिति' उदारधोरणीमनुसरति च। परं लोके सर्वप्रांतीयभाषा नाम न कस्यापि प्रान्तस्य भाषा इति अर्थाभावेऽपि अर्थात्तत्रैव पर्यवसानं भवति। यथा अत्यौदार्येण सर्वस्वं प्रदत्तवान् पिता अन्ते यथा कुत्रापि शरणं अलभमानः नैकपुत्रकलत्रदत्वेपि अनाथवत् विपद्यते खिद्यते च तद्वत् सर्वप्रान्तीयेति शुष्कोपचारैः सम्भाविता इयं सुरगीः कुत्रापि स्थानं मानं वा नविन्द्येयेतेव सन्देहः वृश्चति नश्चेतो विपश्चिदपश्चिमानां च। सर्वेऽपि स्वस्वभाषाभिवृद्धयर्थमेव यदि प्रयतेरन्-प्रयतिष्यन्त्येव तदा संस्कृतोद्धारार्थं कः प्रयस्येत्। वस्तुतो विचार्यमाणे संस्कृतप्रोत्साहनं विना न काचिदप्यत्र भारतीया भाषा आत्मनः उन्नतिं वा प्रगतिं वा साधयितुमीष्टे। उत्कर्षपथे सत्वरं प्रसरंतीनां प्रधावन्तीनां च भाषाभगिनीनां पदे पदे संस्कृतस्य आवश्यकता प्रतिभाति।

( शेषं २७ तमे पृष्ठे )

  

# कर्नाटकप्रान्तस्य सीमानः

नवम्बरमासि प्रथमदिनादारभ्य नूतनतया देशविभागाः व्यवस्थाप्यन्ते इति खलु उद्घोषितम् । अस्मिन् सन्दर्भे भाषानुगुण्येन यदि प्रांताः निर्मीयन्ते तर्हि चतुर्दशविभागाः स्युः खलु । अत्र च दिशोऽवलंब्य चत्वारः एव विभागाः कर्तव्याः, यदि अनन्तरं अवश्यं स्यात् तर्हि मध्ये अन्यः विभागः भवतु, आहत्य पञ्च विभागाः एव प्रशस्यतराः इति नूतनः कश्चन प्रस्तावः उपस्तूयते केनचित् । अयं नूतनतया उपन्यस्यमानः विभागक्रमः राज्यसंभरणनिर्वाहदृष्ट्या सौकर्यसम्पादनार्थमेव उपक्षिप्यते, अस्मिन् विषये संशयो नास्ति, परन्तु प्राचीनकाले भारतवर्षमागताः चीनदेशीययात्रिकाः (Huven Tsang, Fa Hian इत्यादिकाः) क्रिस्तोः पञ्चमे शतके एव 'Five Indias' "पांचिकं भारतवर्ष" इत्येव देशस्याख्यां प्रददुः । सुप्रसिद्धः आलंकारिकशेखरः राजशेखरः (820–120A.D.) स्वोपज्ञभूते काव्यमीमांसाख्ये ग्रन्थे सप्तदशेऽध्याये आर्यावर्ते (–इदं एवास्माकं देशस्य प्राचीनं नाम–) पूर्वदेशः, दक्षिणापथः, पश्चाद्देशः, उत्तरापथः, मध्यदेशः इत्येतानेव पंच विभागान् अमण्डयत् । अस्य साक्षात् वाक्यान्येतानि "वाराणस्याः पुरतः पूर्वदेशः, देवसभायाः परतः पश्चाद्देशः । पृथूदकात् परतः उत्तरापथः । तेषां मध्ये मध्यदेशः इति कविव्यवहारः" इति । अस्मादपि प्राचीनतरः वराहमिहिरः (क्रिस्तोः षष्ठशतकमध्यकालः) बृहत्संहितायां (१४–१६ अध्यायाः) ईदृशमेव सामान्यतः दिग्विभागावलंबिनं एव विभागक्रममालंबते । वात्स्यायनकामसूत्रव्याख्याता जयमङ्गलोऽपि इत्थमेव– वङ्गाः

> देहीति वचनं श्रुत्वा
> देहस्थाः पञ्चदेवताः ।
> मुखान्निर्गत्य गच्छन्ति
> श्री ह्री धी धृतिकीर्तयः ॥

 

महानद्याः पूर्वेण । कलिङ्गाः गौडविषयाद्दक्षिणेन । बाल्हीकदेश्याः उत्तरापथिकाः । आवन्तिका उज्जयिनीदेशभवाः । ता एव अपरमालव्याः। पश्चिमसमुद्रसमीपदेशे अपरान्तदेशः । अपरमालवपश्चिमेन लाटविषयः । नर्मदायाः दक्षिणेन देशः दक्षिणापथः, तत्र कर्णाटकविषयात् पूर्वेण आंध्रविषयः । नर्मदाकर्नाटविषययोः मध्ये महाराष्ट्रविषयः । कर्णाटकविषयात् दक्षिणेन द्राविडविषयः । कोङ्कणविषयात् पूर्वेण वनवासविषयः इत्यादीन् अधिकान् विभागान् पुरस्कुर्वन्नपि स्थूलतया दिशः अवलम्ब्यैव विभागमाद्रियते । एतान् सर्वानभिप्रायान् अपि क्रोडीकृत्य Burmingham इति नामकः भूगोलशास्त्रज्ञः स्वोपज्ञे प्राचीनभारतभूगोलग्रन्थे (Ancient Geography of India) उत्तरापथः, पश्चिमभारतं, मध्यभारतं, प्राच्यभारतं, दक्षिणभारतं इत्येव विभागं पुरस्करोति । अस्य वचनानुसारेण दक्षिणभारते नासिकात् गञ्जाम् पर्यन्तं पूर्वपश्चिमदिशि, कन्याकुमारीपर्यन्तं दक्षिणस्यां दिशि, अधुना बीरार्, तेलङ्गाना, महाराष्ट्र-कोङ्कण-हैद्राबाद-मैसूर-ट्रावंकूर इति व्यपदिश्यमानाः देशविभागाः अर्थात् नर्मदा-महानद्योः दक्षिणभागस्थ; प्रायद्वीपः (Peninsula) समावेश्यते।

एतदनन्तरं बृहत्संहितायां वराहमिहिरः कथं वा कर्णाटदेशं निर्दिशतीति द्रक्ष्यामः । चतुर्दशेऽध्याये त्रयोदशे श्लोके पठामः– कर्णाटकमहाट विचित्रकूट नासिक्य कोल्लागिरि चोलाः क्रौंचद्वीपजटाधरकावेर्यो ऋष्यमूकः चेति । इत्थमेव नृपतुङ्गचक्रवर्ती (815-877 A. D.) स्वोपज्ञे कविराजमार्गे प्रथमे परिच्छेदे षट्त्रिंशत्तमे श्लोके कर्णाटकदेशसीमानः इत्थं निर्दिशति कावेरियिंदमा गोदावरिवरमिर्दु नाडदा कन्नडदोळ् । भाविसिद जनपदं वसुधावलयविलीनविशदविशेषम् ।। अर्थात् कावेरिनद्याः

  

आरभ्य गोदावरीनदीपर्यन्तं प्रदेशः कर्णाटकदेश इति व्यवह्रियते । तत्रैव च तदनन्तरे श्लोके सीमासु स्थितानि चत्वारि नगराण्यपि निर्दिशति– अदरोळगं किसुवोलिलाविदितमहाकोपणनगरदा पुलिगेरेया । सदभिस्तुमप्योंकुन्ददनडुवननाडे कन्नडद तिरुळ् ।। अर्थात् किसुवोल्, महाकोपणं, पुलिगेरे, ओंकुन्दं एतानि तस्मिन् काले प्रसिद्धानि नगराणि चतुर्षु सीमासु अवर्तन्त । तेषां मध्यस्थितः देशः इत्यस्याशयः । एतेषु प्रदेशेषु वासिनः जनाः अतिचतुराः, विद्याध्ययनाभावेऽपि काव्यप्रयोगपरिणतमतयः इति तान् प्रशंसति । कदाचित् अत्र राजानः नासिकनगरं राजधानीं चक्रुः, अन्यदा मान्यखेटं, कुत्रचित् वनवासिनगरं, अन्यत्र बादामीनगरं, कुत्रापि द्वारसमुद्रं बेलूरु, अन्ततश्च मैसूरुनगरं तेषु तेषु कालेषु राजधानीं कल्पितवन्तः, विविधाः वंशावलीः स्थापितवन्तः च । अत्रत्यः पुलकेशिनामकः राजा उत्तरापथचक्रवर्तिनं हर्षवर्धनमपि संयुगे विजित्य परमेश्वरः इति प्रथितः बभूव । (इममेव विजयं वर्णयन् चीनयात्रिकः युवान् च्वांगनामकः भारतवर्षं 'Five Indias' अर्थात् पंचकं इंडियं निर्दिशति) अजन्त, एल्लोरा इत्यादि जगत्प्रसिद्धासु गुहासु उत्कीर्णाः शिल्पाः अत्रैव कर्णाटकदेशे । साहित्ये वेदान्ते च प्रथिताः वैष्णव-शैव-वीरशैव-पाशुपतमतीयप्रवर्तका अपि अत्रैव जन्म लेभिरे । भाषाद्वये (संस्कृतकर्नाटयोः) पांडित्यं अधिगतवन्तः जगन्नाथविजयस्य प्रणेता रुद्रभट्टः, रन्नपोन्नपंपादयः प्रसिद्धाः कवयः च । शङ्कर-रामानुज-मध्वादिभगवत्पादानामपीयमेव जन्मभूमिः । (यद्यपि श्रीशङ्करः केरलीयः तथापि तत्काले (अष्टमशतके) स भूमिभागः कर्णाटकदेशांतर्गत एवासीदिति प्रतिभाति) अत्रैव च अत्युत्तमाः हरिदासाः उत्तमा कीर्ति

प्राप्तवत्य: नाटककर्त्र्य: कवयित्र्य: च, प्रसिद्धा: राज्ञ्य:, शूरा: क्षत्रियाण्य:, गणितादिभौतिकशास्त्रेषु अधीतिन्य: अधीतिन: च, किं बहुना विविधेषु शास्त्रेषु पाण्डित्यं वहन्त्य: (वहन्त्य: स्त्रियश्च) कर्णाटप्रदेशमलञ्चक्रु: इत्यत्र विचित्राणि साक्ष्यभूतानि तत्र तत्रोपलभामहे ।

अधुना च कासांचित् कवयित्रीणां नामानि निर्दिश्य विरमाम: । राजशेखरस्य (काव्यमीमांसाप्रणेतु:) अयं श्लोक:–

सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ ।
या वैदर्भगिरां वास: कालिदासादनन्तरम् ॥

विजयाङ्का इति कौमुदीमहोत्सवनाटकस्य प्रणेत्री इति ज्ञायते । इदं च नाटकं शकुन्तलाराव शास्त्री इति विदुष्या १९५२ तमे वर्षे भारतीयविद्याभवनत: नूतनतया सम्पादितं प्रसिद्धमधुना । कालिदासानन्तरं वैदर्भगिरां अधिष्ठात्री इति यदा राजशेखर: मुक्तकण्ठं इमां स्तौति तदास्या: वैदुष्यं स्फुटमेव प्रतीयते खलु । अस्या: गर्वोक्ति किंचिदिव शृणुम:–

एकोऽभून्नलिनात्, ततश्च पुलिनात्, वल्मीकतश्चापर:
ते सर्वे कवयो भवन्ति गुरव:, तेभ्यो नमस्कुर्महे ।
अर्वाञ्चो यदि गद्यपद्यरचनै: चेतश्चमत्कुर्वते
तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया ॥

अर्थात् कमलसंभव: ब्रह्मा, नदीपुलिनसंभव: व्यास:, वल्मीकसंभव: च एते त्रय एव अस्या: नमस्कारमर्हन्ति । अन्येषां च सर्वेषां अर्वाचीनानां कवीनां शिरस्सु वामं चरणं तिरस्कारपूर्वतया निधास्यतीयं कवयित्री । को वासौ कर्णाटकराज इति न सुस्पष्टं ज्ञातुं शक्यते इत्यहो दैवविरोधिता ! अन्या च सुप्रसिद्धा कवयित्री कम्पननामकस्य विजयनगरसामन्तस्य भार्या गङ्गादेवीनाम्नी । क्रिस्तो: षोडशशतके भुवमलञ्चकार इयम् ।

  

अस्याः भर्तुः विजयवृत्तान्तं मधुराविजयनामकं महाकाव्यं प्रेमपूर्वकं निबवन्ध, कालिदासानुयायिनमात्मानं कथयति—

**दासतां कालिदासस्य कवयः के न बिभ्रति ।**
**इदानीमपि तस्यार्थान् उपजीवन्त्यमी यतः ॥**

राजशेखरेण शीलाभट्टारिका, विकटनितम्बा विजयाङ्का प्रभुदेवी इति चतस्रः कवयित्र्यः प्रशस्यन्ते । तासु विजयाङ्का कार्णाटी इति तेनैव 'सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ' इति श्लोके वर्णिता । प्रायेण अन्याः अपि कार्णाटयः एव स्युः । यथाकथञ्चिदपि भवतु, "रसः कोऽप्यस्तु, काप्यस्तु रीतिः कोऽप्यस्तु वा गुणः । सगर्वं सर्वकर्णाटाः टंकारोत्तरपाठिनः ॥" इति कर्णाटदेशीयान् प्रशंसति । स एव काव्यमीमांसायां "पुरुषवत् योषितोऽपि कवीभवेयुः । संस्कारो ह्यात्मनि समवैति । न स्त्रैणं पौरुषं वा विभागमपेक्षते । श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्रदुहितरो गणिकाः कौतुकिभार्याः च शास्त्रप्रहतबुद्धयः" च इति वदन् स्त्रियोऽपि कवयित्र्यो भवन्तीति पेशलं वदति । अस्य भार्या अवन्तिसुन्दरीनाम्नी चौव्हान् वंशीया इति निर्दिश्यते । सा कर्णाटी एव स्यादिति अनुमातुं शक्यते । सा च प्रसिद्धा कवयित्री अलङ्कारशास्त्रज्ञा इति प्रतिभाति । तत्र तत्र च तदीयानि पद्यानि तद्भर्त्रा प्रेमपुरस्सरं उदाह्रियन्ते ।

**बहिरालापात्मकप्रश्नस्य उत्तरम**

श्रीक्षोणीं त्रिपदामयाचत बलिं धर्मैकदृग्**वामनः**,
शश्वत्पुष्परसं पिबेच्च **मधुपो**, लोकैकचक्षुर्महान्,
आकाशे **तरणिः**, **शिवाजिरधिको**ऽजैषीच्च दिल्लीश्वरं,
**वाणीपः** (शः) सुमनोगुरुर्नृपतयो वांछन्ति ते **काञ्चनं**,
प्राधान्यं मनसश्चलत्वमसमं सर्वेन्द्रियाधीशितुः,
कंसो **घातुक** एव बान्धवजने श्रीदेवकीसन्ततेः,
भूनेतुस्सचिवस्सुनीतिकुशलः, कल्के **स्तुरङ्गो** मतः,
त्वग्रश्नोत्तरमध्यमाक्षरगणो राराजतां भारते ॥

# "जीवनं भारभूतम्"

"समस्यापूरकः" पं. श्री घनश्यामचन्द्र शास्त्री "विद्यामार्तण्डः"
"विद्यारत्नम्" प्रधानाचार्यः श्री ऋषिकुलसंस्कृतकॉलेज, लक्ष्मणगढ (सीकर)

केचिद्यान्ति द्रविणपगृहं स्वाभिमानं विहाय
प्रान्ताधीशानविरतमपि प्रार्थयन्ते निजार्थम् ।
ये नार्चन्ति त्वजमखिलपं माधवं तज्जनानां
नो सेवन्ते खलु सुरगिरं जीवनं भारभूतम् ॥१॥

साहित्याब्धिं विविधजनतापोषकं रत्नराशिं
विद्वद्वर्या विविधवचनैर्भावभङ्ग्या भजन्ते ।
तत्रोत्कृष्टं परमहितकृत् संस्कृतं राष्ट्रभाषां
जानन्तोऽप्यर्यास्तदितरनृणां जीवनं भारभूतम् ॥२॥

मान्याऽभिज्ञाः शृणुत सदयं भारतेऽस्मिन्नवीने-
ष्वेन्वम्बानां कुटिलविधया कर्तनं वर्त्ततीति ।
तद्रोधार्थं विमलमतिभी राजकीयैस्तथान्यै-
र्धीराकार्या द्रुतमितरथा जीवनं भारभूतम् ॥३॥

श्रीमद्देवीपरमकृपया मानुषं जन्म लब्ध्वा
दैवीं वाचं सततपसा सद्गुरोराप्य यैश्च ।
भाषादेशोन्नतिरविहिता नो सदाचाररक्षा
तेषां स्वार्थान्वितखलधियां जीवनं भारभूतम् ॥४॥

सत्याहिंसे परमशमदे ब्रह्मचर्येण युक्ते
नित्यं सेव्ये सरलमनसा संस्कृतं संस्कृतिश्च ।
प्राज्ञो विज्ञा धृतगुणचया भारतादर्शभूता-
स्तान् गर्हित्वा भुवि विचरतां जीवनं भारभूतम् ॥५॥

श्रीराजस्थान संस्कृतसाहित्यसम्मेलनीय कविसम्मेलने
प्राधान्येन पठिता ।

---

  

# बुद्धचरितम्

ले:— स. प. गानू, सम्पादक: " संस्कृत-भवितव्यम् " नागपुरम्

प्राचीनपरम्परया अधीयाना: संस्कृतमहाकाव्येषु प्रायेण, रघु-कुमार-किरात-शिशुपाल-नैषधानां एव गणनां कुर्वन्ति। एतानि एव पंचमहाकाव्यानि अधीयते छात्रा: अध्याप्यन्ते च गुरुभि:। एतेषां पंचानां एव महाकाव्यत्वेन ख्याति:। किन्तु सकललोकललामभूतायां अस्यां भाषायां केवलानि पंच एव काव्यानि अभूवन् नाधिकानि इति जल्पत: कल्पनादारिद्र्यं एव सुव्यक्तं स्यात् इति नासमीचीनं वच:।

तथा हि महाकविना भट्टिना विरचितं रावणवधसंज्ञकं 'भट्टिकाव्यम्' इति अपरेण नाम्न ।संस्कृतसाहित्ये प्राप्तगौरवं, संस्कृतसाहित्यललामभूतं अपि व्याकरणशास्त्रनिपुणानां मन: हरत् लसत्तेज: महाकाव्यं को नु खलु अधन्य: न जानाति। बिल्हणकृतौ विक्रमाङ्क-देवचरिते को नु नाव्हयति रसम्। न पृथ्विराज-विजयकाव्यम् अपि न सहृदयहृदयग्राहि। शिवभारते रता: अनारतं जेगीयन्ते माहात्म्यं तस्य। महामुनिना पाणिनिना व्याकरणे कृतव्यवसायेन अपि साहित्ये प्रतिभाविलास: अकारि पातालविजय-संज्ञकं महाकाव्यं च व्यरचि इति न अविज्ञातं संस्कृते कृतस्नेहानाम्। एवं किल अनेकेषां अपरेषां ग्रन्थानामुल्लेखं कर्तुं पार्यते। किन्तु प्रस्तुतं अप्रस्तुतं अप्राकरणिकं च इति नात्र प्रपञ्च: क्रियते।

एतेषु एव काव्येषु अन्यतमं संस्कृतभाषोदधिरत्नं पिपठिषूणां मनस्तोषं पोषयत् जिज्ञासूनां स्वान्तं नितान्तं समुद्भासयत् शूश्रूषूणां कर्णौ पावयत् वर्तते महाकाव्यं एकं बुद्धचरितसमाख्यं। काव्यं एतद् अश्वघोषेण विरचितम्। क: अयं अश्वघोष: किं

तेन वर्णितम् अत्र काव्ये, इति सर्वं एव विषयं अधुना विवरीष्यामहे ।

अश्वघोषः अयं कदा संजातः इति विषये न प्रमाणपूर्वकं ज्ञानं लभ्यते । किन्तु एषः तु साधारणः एव दोषः सर्वेषां कवीनां संस्कृतसाहित्ये प्राप्तगौरवाणाम् । येच अत्र विषये कृतभूरिपरिश्रमाः पौरस्त्यपाश्चात्यविद्वांसः ते, "कविः असौ कनिष्कराजस्य सभायां आसीत्" इति प्रमाणीकुर्वन्ति । तदेव अस्माभिः स्वीक्रियते ।

अस्य कवेः विषये वर्तन्ते बव्ह्यः आख्यायिकाः पण्डितेषु प्राप्तप्रसाराः। स्वाभाविकिं च तद् अति-प्राचीनत्वात् अस्य । तथा हि श्रूयते यदयं हिन्दुधर्मानुयायी आसीत् आदौ । स्वबुद्धिप्रकर्षखर्वगर्वपर्वताधिरूढः असौ अन्यान् न्यक्कृतिगर्ते निपिपातयिषुः समुदघोषीत् यथा न मदन्यः कोऽपि नगरे लम्बमानां घंटां निनादयितुं क्षमः स चेत् विवादे मां पराजेतुं अक्षमः । यः कश्चित् मां पराजेष्यति स एव बौद्धः घण्टास्पर्शं अर्हति नान्यः। मदज्वरं अस्य अपनिनीषुः परमकारुणिकः महामहिमः पार्श्वः तत्र समायातः । स एकं एव प्रश्नं अप्राक्षीत् । "यथा विश्वम् एतत् शांतिं दीर्घं आयुः च लभताम्, राष्ट्राणि स्युः चिरसमृद्धिसंयुतानि, लोकाः च स्युः दुःखविमुक्ताः तथा कोऽस्ति उपायः।" पृष्टमात्रे अस्मिन् प्रश्ने अश्वघोषः नाप्रभवत् उत्तरदाने, नाशक्नोत् स्वकीयं श्रेष्ठत्वं प्रमाणयितुम् । अतः पार्श्वस्य शिष्यत्वं स्व्यकार्षीत् । तेन एव आज्ञप्तः बौद्धधर्मस्य स्वीकारे बौद्धधर्मप्रचारे च रतिम् अबध्नात् ।

अन्या अपि वर्तते आख्यायिका । राज्ञा कनिष्केण मगधाः आक्रान्ताः पराजिताः च । अथ उभयोः नृपयोः समये "अश्व-

घोषः समर्प्यः" इति पणं प्राचीकटत् कनिष्कः। मगधराजः नैच्छत् समर्पयितुं तम्। अतः नान्वमन्यत पणं एतम्। राजसभास्थैः पण्डितैः "अहो अस्थाने इयं प्रीतिः अश्वघोषे राज्ञः। कं खलु विशेषं समीक्ष्य अस्य सङ्कटसमाकुलं अपि देशं नावेक्ष्यते। सङ्कट-तरणोपाये विदिते अपि न उत्सहते आचरितुम्।" इति परस्परेषां कर्णेषु अभाष्यत सनिर्वेदम्। तदवगत्य अश्वघोषस्य अनन्यसामान्यत्वं प्रमाणयितुकामेन राज्ञा अश्वशालास्थाः अश्वाः दिनैकं विनाहारं स्थापिताः। अन्यस्मिन् दिने तृणादिकं न्यस्तं तेषां च पुरस्तात् भक्षणाय। अश्वघोषः च आज्ञप्तः स्वप्रवचन-प्रारम्भाय। अथ प्रारब्धमात्रे प्रवचने बुभुक्षितैः अपि अश्वैः पुरः-स्थितं तृणादिकं विहाय अश्वघोषप्रवचनलग्नचेतोभिः अभावि। ततः एव अश्वघोष इति नाम प्रसिद्धिं आपत् श्रेष्ठत्वं च अस्य सर्वैः अन्वमानि।

कनिष्कः स्वराजधानीं अनैषीद् एनं तत्र च स्वायोजितायाः बौद्धपरिषदः अध्यक्षं अकार्षीत्। एवं असौ सम्मानितः तेन। अश्वघोषः महाविभाषां बौद्धदर्शनसिद्धांतानां सर्वेषां संग्राहकं महाग्रन्थं प्राणैषीत्।

अश्वघोषेण प्रणीताः अन्ये अपि ग्रन्थाः—

१) **सौन्दरनन्दं** नाम महाकाव्यं अपरम्। एतद् अपि बौद्ध-मतप्रसारधिया एव निबद्धम्।

२) **सूत्रालङ्कारः** बौद्धधर्मशिक्षार्थं कथा काचित् वर्णिता अत्र। अनेन ग्रन्थेन त्रिविष्टपभाषासंस्करणे एव अवशिष्यते।

३) **महायानश्राद्धोत्पादः** महायानपन्थस्य पूर्वतरविदुषां सिद्धांताः अत्र उपवर्णिताः। अनेन हि ग्रन्थेन परमदार्शनिकत्वं अस्य सिद्ध्यति। साहित्ये अप्रतिहितगतिः असौ तत्त्वचिन्तायां

अपि अचिंतनीयं प्रभावं प्रावीकटत् इति कस्य हृदयं कुतूह-
कुलं न स्यात् ।

४) **वज्रसूचिः** "राजन्यपुत्रेण ब्राह्मणाः ननु अननुशा-
नीयाः" इति ब्रुवतां जात्यभिमानलिप्तानां ब्राह्मणब्रुवानां
संहर्तुकामेन अनेन अत्र चातुर्वर्ण्यव्यवस्था कठोरं अधिक्षिप्ता

५) **गण्डीस्तोत्रगाथा** खण्डकाव्यसदृशं किमपि सङ्गी
काव्यं एतत् । अनेन हि कवेः छन्दःशास्त्रे सङ्गीतशास्त्रे च नि
ष्प्रत्यूहः आसीत् प्रचारः इति निर्दिशयः भवति विषयः ।

एतेषां ग्रन्थानां केवलं अवलोकनं एव अस्य बुद्धेः सर्वं
मित्वं प्रकाशयितुं समर्थम् ।

**बुद्धचरितम्**

अस्य काव्यस्य विषयः भगवतः बुद्धस्य चरितवर्णनं इ
तन्नाम्ना एव प्रकटीक्रियते । काव्यं एतद् अष्टविंशतिसर्गेषु नि
बद्धं उपलभ्यते चीनभाषायां त्रिविष्टपभाषायां च अनूदितम्
कुत्रचित् च सप्तदश-सर्गान्तं एव काव्यं एतद् उपलभ्यते । एते
सप्तदश-सर्गेषु अपि त्रयोदश-सर्गाः एव अश्वघोष-लिखिताः
अवशिष्टाः चत्वारः सर्गाः अमृतानन्दनाम्ना केनचित् महाभा
गेन इति श्रूयते । भगवतः बुद्धस्य जन्मनः प्रारभ्य लुंबिनीयाः
यावत् चरितं वर्णितं एषु सप्तदशसर्गेषु ।

संस्कृत-साहित्य-शास्त्रे श्रेष्ठत्वेन जेगीयमानायाः वैदर्भी
रीत्याः आविष्कारः अत्र काव्ये दरीदृश्यते । सुलभा भाषा
प्रसादयुक्ता च प्रसादयति चेतः सहृदयस्य । प्रायेण वृत्तांतकथ
एव कविना स्वकीयं चेतः सन्निवेशितं न अलङ्कारग्रथने । रस-
परिपोषानुकूलान् एव स्वयमापतितान् अलङ्कारान् कविः ग्रथ्ना-
ति । यथा च काव्यमीमांसाकारैः उच्यते, " कथं नु वयं दृश्या-
महे इति अयमहमिकया परापतन्ति " तदेव अस्य कवेः विषये

युक्तत्वं व्यनक्तितमाम् । उपमा, उत्प्रेक्षा-निदर्शनादीनां अलंकाराणां यथोचितः सन्निवेशः कृतः अनेन कविताकामिन्याः शरीरे ।

काव्ये अस्मिन् वर्तमानानां सौंदर्यस्थलानां निर्देशः यथा सुकरः तथा दुष्करः इति न अवितथा कथा बृहदाकारत्वात् अस्य काव्यस्य, अल्पावकाशत्वात् च अस्य लेखस्य । तथापि यथाशक्यं प्रयते ।

"अथ नारीजनवृतः कुमारो वचनद्रनम् ।
वासितायूथसहितः करीव हिमवद्वनम् ॥"

इति उपमालंकृतिः कस्य मनः हर्तुं न क्षमेत ।

"इदं पुरं तेन विवर्जितं वनं वनं च तत्तेन समन्वितं पुरः ।
न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम् ॥"

इत्यपि उपमागौरवगिरिशिखरं आरोढुं क्षमा उपमा ।

"न चुक्रुशुर्नाश्रु जहुर्न शश्वसुर्न चेतना उल्लिखिता इव स्थिताः ।"

इति उत्प्रेक्षालंकृतिः कस्य खलु सहृदयस्य हृदयं न चमत्करोति

"यः पित्तदाहेन विदह्यमानः शीतक्रियां भोग इति व्यवस्येत् ।
दु खप्रतीकारविधौ प्रवृत्तः कामेषु कुर्यात् स हि भोगसंज्ञाम् ॥"

इति निदर्शनं कस्य खलु प्रज्ञावतः चेतः न स्पृशेत् ।

सुभाषितानि अस्य काव्ये सर्वत्र प्रसृतानि मुखोद्गतानि कर्तुं योग्यानि ।

"असत्सु मैत्री स्वकुलानुरूपा न तिष्ठति श्रीरिव विक्लवेषु ।
नित्यं हसत्येव हि नैव राजा न चापि सन्तुष्यत एव दासः ।
आज्ञा नृपत्वेऽभ्यधिकेति यस्मात् महांति दु खान्यत एव राज्ञः ।"

अत्र अन्तिमः चरणः Uneasy lies the head which wers the crown इति आंग्लभाषाविभूषायाः उक्तेः स्मारयति ।

"यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥"

इत्यर्थः अन्यैः शब्दैः कविना अनेन प्रकारेण प्रस्तूयते—

"वासवृक्षे समागम्य विगच्छन्ति यथाण्डजाः।
नियतं विप्रयोगांनस्तथा भूतसमागमः॥

काष्ठादग्निर्जायते मथ्यमानात् भूमिस्तोयं खन्यमाना ददाति।
सोत्साहानां नास्त्यसाध्यं नराणां मार्गारब्धाः सर्वयत्नाः फलन्ति॥

इति कविताकामिन्याः हासस्य भासस्य प्रतिज्ञायौगन्धरायणस्थं श्लोकं अनुवदति असौ एभिः शब्दैः।

काष्ठं हि मथ्नन् लभते हुताशं भूमिं खनन् विन्दति चापि तोयं।
निर्बंधिनः किं च न नास्य साध्यं न्यायेन युक्तं च कृतं च सर्वम्॥

यथा च न्यायसूत्रे उच्यते सकलमेव जगद्दुःखपङ्कनिमग्नं समुद्दिधीर्षुः आचार्यः प्रणिनाय न्यायशास्त्रम् तथैव असौ अपि भगवान्

"जननमरणयोरदृष्टपारो न पुनरहं कपिलाह्वयं प्रवेष्टा।"

इति प्रत्यजानात्।

सकलं एव जगदेतत् दुःखनिमग्नं एव। ये के भोगाः इति व्यपदिश्यन्ते जनैः ते अपि दुःखप्रतीकारस्वरूपा एव इति प्रमाणयितुं लिख्यते—

इष्टं हि तर्षप्रशमाय तोयं क्षुन्नाशहेतोरशनं तथैव।
वातातपांब्वावरणाय वेश्म कौपीनशीतावरणाय वासः॥
निद्राविधानाय तथैव शय्या यानं तथाध्वश्रमनाशनाय।
तथासनं स्थानविनोदनाय स्नानं मृजारोग्यबलाश्रयाय॥

कविः असौ बुद्धधर्मानुयायी अपि हिंदुधर्मग्रन्थेषु कृतभूरिपरिश्रमः इति दरीदृश्यते पदे पदे।

यदा च मन्त्रिपुरोहितौ वनात् प्रतिनिवर्तनार्थं प्रार्थनाम् अकुरुतां तदा स्वाग्रहसमर्थनार्थं ताभ्याम् उच्यते—

भीष्मेण गङ्गोदरसम्भवेन रामेण रामेण च भार्गवेण।
श्रुत्वा कृतं कर्म पितुः प्रियार्थं पितुस्त्वमप्यर्हसि कर्तुमिष्टम्॥

भगवता, मगधाधिपं उद्दिश्य उच्यते ।

देवेन वृष्टेऽपि हिरण्यवर्षे द्वीपान्समुद्रांश्चतुरोऽपि जित्वा ।
शक्रस्य चार्धासनमप्यवाप्य मांधातुरासीद्विषयेष्वतृप्तिः ॥
भुक्त्वापि राज्यं दिवि देवतानां शतक्रतौ वृत्रभयात्प्रनष्टे ।
दर्पान्महर्षीनपि वाहयित्वा कामेष्वतृप्तो नहुषः पपात ॥ इत्यादि.

रामवनवासप्रसङ्गः बुद्धस्य च गृहत्यागप्रसङ्गः इति उभावपि परस्परसमकक्षतां अधिरोहतः ।

जराजीर्णं, रोगविदीर्णं, मृतं इति नरत्रयं वीक्ष्य बुद्धस्य मनसः व्याकुलत्वं कविना चारुवर्णितं अपि विस्तरभिया नात्र प्रकाश्यते मूलत एव तद्द्रष्टव्यं दिदृक्षुभिः ।

कालिदास-कविना कविकुलशेखरेण साम्यं अस्य प्रतीयते केषुचित् श्लोकेषु । अत्र केचिद् एव श्लोकाः उद्ध्रियन्ते ।

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥
इति पद्यम्

स हि स्वगात्रप्रभयोज्ज्वलन्त्या दीपप्रभां भास्करवन्मुमोष ।
महार्हजाम्बूनदचारुवर्णो विद्योतयामास दिशश्च सर्वाः ॥
इति पद्येन ।

"कस्यात्यन्तं सुखमुपनतं दुःखमेकांततो वा" इति मेघदूतोक्तिः

अतोऽपि नैकान्तसुखोऽस्ति कश्चित्
नैकान्तदुःखः पुरुषः पृथिव्याम । इति उक्त्वा

अलं महीपाल तव श्रमेण प्रमुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्य ॥
इति श्लोकः

मोघं श्रमं नार्हसि मार कर्तुं हिंस्रात्मतां उत्सृज गच्छ शर्म ।
नैव त्वया कम्पयितुं हि शक्यो महागिरिर्मेरुरिवानिलेन ॥
इति श्लोकेन आशयसाम्यं बिभर्ति इति स्पष्टम् ।

एवं सर्वगुणसम्पन्नं अपि एतत् काव्यं कुत्रचित् व्याकरण-दोषविदुष्टं अपि अवलोक्यते। यथा च "गृह्य" इति रूपम्। किन्तु एतेषां आर्षप्रयोगाणां भावः कवेः प्राचीनत्वं एव व्यनक्ति न व्याकरणाज्ञानम्।

अनेन प्रकारेण यथाशक्ति यथामति महाकाव्यस्य अस्य सौंदर्यदर्शने कृतप्रयत्नेन मया कियद् यशः अवाप्तं इति निर्णये तु वाचकाः एव अधिकृताः न अहम्। लेखस्य अस्य पठनेन मूल-ग्रन्थावलोकने बुद्धिं बन्धीयुः चेत् ते सफलोऽयं प्रयासः इति मंस्ये।

## वेंकटगिरिमहिमा

**वें पापं कटते यस्मात् पापदाहनशक्तितः।**
**वेंकटाचल इत्येव नाम देवास्तदा जगुः॥**

पूर्वं कालहस्ति नामके नगरे पुरन्दरो नाम सोमयाजी शुचिर्भूतः ब्राह्मण आसीत्। तस्य माधवो नाम वेदवेदांततत्वज्ञः सर्वविद्याविशारदः पुत्रः आसीत्। सः माधवः पांड्यदेशीयां चन्द्रलेखां नाम राजकुमारीं परिणीतवान्। एवं गच्छता कालेन कदाचित् माधवः दिवा सङ्गमाय स्वपत्नीं चन्द्रलेखां आह्वयत्। धर्मशीला पापभीरुश्च सा चन्द्रलेखा पत्युरिमां अकालसम्भोगेच्छां "तत्रापि दिवसक्रीडां अयुक्तां मुनयो विदुः। निकेतने पिता माता अग्निहोत्रं च देवराट्। प्रभाकरप्रभां पश्य त्यज कामं द्विजोत्तम"। इत्यादिभिः सान्त्ववचनैः निषेधितवती। परं कामान्धः माधवः यदा स्वस्य दुराग्रहं न अमुञ्चत् तदा सा पतिपरायणा 'इदं नीचकृत्यं अत्र माता पितृसन्निधौ मास्तु। वनं गच्छावः तत्रैव एकान्ते भवन्मनोरथं पूरयेति' उक्त्वा स्वयं एकं घटं गृहीत्वा जलानयननिमित्तं कृत्वा वनांतरं प्रविवेश। ततः पूर्वमेव तुलसीपुष्पाद्याहरणव्याजेन माधवोऽपि सङ्केतस्थानमुपागतः। तत्र च सः कामपि कमनीयकन्तिं अन्यां कामिनीं दृष्ट्वा कामपरवशो बभूव। ततः तत्रागतां स्वभामिनीं चन्द्रलेखामुद्दिश्य परिहासपूर्वकं "त्वं

प्रेमपरीक्षार्थमेव त्वमत्र आनीता । न भोगार्थं । तत्र भक्त्या प्रेम्णा च सन्तुष्टोऽस्मि गृहं गच्छेति, तां गृहं प्रेषयामास ।

ततः अतीव सुन्दरीं शुभ्रवस्त्रधारिणीं अञ्जनालिप्तनयनां मञ्जुलस्वर-रञ्जितां कञ्जाक्षीं नीलकुन्तलां कुन्तलां नाम तां कामिनीं उपसृत्य 'का त्वम्' इति अपृच्छत् । सा तु तस्य भावं जानन्ती करुणयाह "द्विजोत्तम अहं चण्डालकन्यका त्वं तु द्विजोत्तमः । दूरतो गच्छ । समीपम् मा उपगच्छ" इति । तदा माधवः एवम् व्यचारयत् यत् "अहो ब्रह्मणः बुद्धिरेव नास्ति । ईदृशं रूपरत्नम् अस्पृश्य-योनौ उत्पाद्य वञ्चिताः खलु सौंदर्योपासकाः तरुणाः । लवणोदकजातान्यपि रत्नानि देवाः स्वीकुर्वन्त्येव । तथा मयापि इयं रूपपक्षपातिना ग्राह्या एव । 'स्त्रीरत्नम् दुष्कु-लादपि' इति अभियुक्तैः युक्तमेव उक्तम् मुक्ताफलोपमम् वचः । तदा तस्य निर्णयं श्रुत्वा सा बाला 'एकस्य सच्छीलस्य ब्राह्मणस्य अधःपातनपातकम् मम मा भवे-दिति' धिया भिया ह्रिया च बहुविधम् धार्मिकमुपदेशम् चक्रे तस्य ब्राह्मणस्य । परम् कामांधः माधवः तां बलाद् बुभुजे। तदा सा तं 'त्वमद्य चण्डालोऽसि संवृत्तः। स्वजातौ मा प्रविश, त्यज शिखां, मुञ्च यज्ञोपवीतम्, पिब सुरां, खाद मांसम् इति आदिदेश । तदस्याः कांतासम्मितोपदेशानुसारं चण्डालो भूत्वा तया सह विविध-स्थलेषु विजहार विचचार च ।

तत एकदा सा नीलकुन्तला कुन्तला च अकस्मात् मृता । तदा संभ्रांत इव विकृतमस्तिष्क इव च बभ्राम माधवः । तदा उत्तरदेशतः केचन राजानः सपरिवारम् तिरुपतियात्रायै गच्छन्ति स्म । उद्भ्रमन् विभ्रमन् कांता-विरहकातरः कृतकर्मपश्चात्तप्तश्च माधवः तेषां औत्तरेयाणां यात्रार्थिनां परिवारे प्रविश्य तदुच्छिष्टमेव अन्नम् भुञ्जानः तैः सहैव शेषाचलम् आगतः । तत्र ते सर्वे कपिल-तीर्थे स्नात्वा श्राद्धादिकम् कृत्वा शैलमारुरुहुः । तैरेव समम् स्वयमपि पितृश्राद्धा-दिकम् विधाय माधवोऽपि तं शैलम् आरूढः । आरूढमात्र एव च पर्वते तत्पाद-स्पर्शप्रभावेण तस्य पापराशिरेव दग्धुमुपाक्रमत । तस्य हृदये विचित्रमेव सङ्कटमभ-वत् । मक्षिकां भक्षितवानिव सः पापपुरुषः माधवः वमनम् कर्तुं प्रारभत । तेन भयङ्करेण वमनेन सर्वोऽपि तस्य पापराशिः अन्तर्गतः क्षणादेव उद्वांतः समभवत् । तदा तदज्ञात् कोऽपि अग्निः समुद्भूतः सुरामांसचण्डालसंसर्गादिजन्यम् पातकम् ददाह । एवम् तस्य पुण्यप्रभावस्य पर्वतस्य पावनतमेन स्पर्शप्रभावेण माधवस्य

सर्वोऽपि पापपर्वतः भस्मीभूतः समभवत्। तदा साक्षाद् ब्रह्मदेवः तत्र आगत्य "भो माधव विप्रेन्द्र! गतपापोसि केवलम्। स्वामितीर्थस्य निकटम् गत्वा स्नात्वा च तज्जले। वराहवदनं नत्वा त्यज देहं महीसुर। सुधर्मस्य सुतो भूत्वाऽकाशानामाथ दक्षिणे। नारायणपुरे वीर तोण्डदेशाधिपो भव। तव पुत्री जगन्माता जामाता च जगत्पतिः। भविष्यति महाराज पश्चाद्वैकुण्ठमाप्स्यसि।" इति माधवमाश्वासयास अनुजग्राह च।

एवं पर्वतोत्तमस्य पुण्यस्पर्शप्रभावेण जन्मान्तरे सः माधवः आकाशराजः बभूव। तस्यैव पुत्रीं पद्मावतीं साक्षान्नारायणः श्रीनिवासः परिणीय तमुद्दधार। अहो प्रभावः पुण्यक्षेत्राणां अहो महामहिमा मायाविनः श्रीनिवासस्य।

मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम्।
स्वामीपुष्करिणीतीरे रमया सह मोदते॥
कल्याणाद्भुतगात्राय कामितार्थप्रदायिने।
श्रीमद्वेंकटनाथाय श्रीनिवासाय ते नमः॥

## दानोत्सुकौ दम्पती

भीष्मातपर्भाकरः ग्रीष्मवासरः। सर्वतः सन्तापमयः मध्यान्हसमयः। महाकवि भासः स्वस्य पर्णकुटीरे स्थित्वा नाटकानि विलिखति। तादृशेऽपि उग्रसमये स्फूर्तिदेवता समनुग्रण्हाति महाकविम्। मधुरमधुराणि अक्षराणि निरर्गलं निर्गलन्ति लेखनीतः। कलासमाधौ लीनः काव्यपरमेष्ठी शाब्दीं सृष्टिं कुर्वन्नेवारते।

तदा कोऽपि दरिद्रब्राह्मणः आगत्य महाकवेः पुरतः अतिष्ठत्। तस्य मुखे दैन्यं दृष्ट्वा भासस्य हृदयं विद्रुतम् अभवत्। "द्विजोत्तम किमपेक्षसे" इति अपृच्छत्। तदा सः ब्राह्मणः तं पुनः प्रणम्य स्वस्य दारिद्र्यं निवेद्य "मम कन्यायाः विवाहः निश्चितः। परं द्रव्याभावात् परिणयं निर्वर्तयितुं अशक्तोऽस्मि। किं करोमि? क्वगच्छामि? इति अपृच्छत्। तदा तस्य दारिद्र्यं दैन्यं दुरवस्थां च दृष्ट्वा दयापूरितमानसः भासः स्वस्य कुटीरे इतस्ततोऽपश्यत्। तत्र सर्वत्रापि केवलं पुस्तकानि लेखनसामग्री च आसन्। परं तत्रैव पर्यङ्किकायां कवेः पत्नी विश्रांतिसुखमनुभवन्ती शेते स्म। तस्याः करे सुवर्णभासुरं कङ्कणयुगलं

# मध्वाचार्याणां ऋग्भाष्यम्

ले. महर्षि देवरातः ब्रह्मचर्याश्रम, गोकर्ण.



श्री मध्वाचार्याणां जन्म ईस्वि ११९९ वर्षे जातं । तैः विरचिते ऋग्भाष्ये ३ अध्यायाः ४० सूक्तानि ४८१ मन्त्राः वर्तन्ते । अयं च भाष्यग्रन्थः अनुष्टुप् छन्दोबद्धः कश्चन लघीयान् पद्यात्मकः प्रबन्धो वरीवर्ति । अद्य यावत् पद्यबद्धं वेदभाष्यं न केनापि निर्मितमवलोक्यते ऋग्भाष्यादन्यत्र । यतोऽत्र प्रसिद्धानि पातञ्जलमहाभाष्य, शाबरभाष्य, उपनिषद्, गीता, ब्रह्मसूत्रादि सर्वभाष्याण्यपि गद्यमयान्येव ननु पद्यप्रबद्धानि । मध्वाचार्याः वेदमंत्राणां त्रिविधान् अर्थान् संसाधयंति । मध्वविजये तैः स्पष्ठमुक्तं 'त्र्यर्थतां श्रुतिषु वित्त' इत्यादिना । श्रुतिमन्त्राणां त्र्यर्थता

---

**भासते स्म । तदूदृष्ट्वा भासः तस्याः समीपं गत्वा शनैः तस्याः निद्राभङ्गं अकुर्वाण एव कङ्कणं प्रकोष्ठाद् उन्मोचयायास । ततः तं रत्नखचितं कनत्कनककङ्कणं सानन्दं मन्दमुपेत्य ब्राह्मणाय दत्वा कृष्णार्पणेत्युक्त्वा नमश्चकार । तदा सः ब्राह्मणः परमानन्देन पूरितः तं आशीराशीभिः अभिनन्द्य प्रस्थितः । तदा तस्य पत्नी समुत्थाय पतिमाहूय ' स्वामिन् एकस्यैव कंकणस्य प्रदानेन पूर्णफलं नैव लभ्यते । इदमप्येकं ब्राह्मणाय प्रयच्छेति ' स्वयं हस्ताद् द्वितीयमपि कंकणमुन्मुच्य ब्राह्मणाय दापयामास । तदा सर्वस्वदानव्यसनिनौ तौ अत्युदारदंपती दृष्ट्वा सः ब्राह्मणः विस्मितः सन्तोषभरितः प्रेमपूरितश्च स्थित्वा ।**

परस्परतपःसम्पत्फलायितपरस्परौ ।
वदान्यावतिमान्यौ चाप्येतौ जायापती स्तुमः ॥

**इति प्रशस्य सानन्दं गृहं गतः । अहो औदार्यं भारतीयदम्पतीनाम् ।**

एव अत्र साधु प्रदर्शिता ऋग्भाष्ये । एकोर्थः सर्वदेवोत्तमस्य विष्णोः परतया, अन्यश्च आपाततः अभिधीयमान सूर्याग्न्यादि-गौणदेवतापरतया, अपरश्च अध्यात्मपरतयेति अर्थत्रैविध्यमेव वेदमंत्राणां साधु संप्रदिशितं स्कांदपुराणवचनानुसारेण । अमुमेव विषयं निरुक्तकाराः श्री यास्कमुनयः 'ताश्च ऋचस्त्रिविधाः प्रत्यक्षकृताः परीक्षकृताः आध्यात्मिकश्चेति' इत्यनेन आह । भिन्नभिन्नमन्त्रेषु एवं त्रिविधोऽर्थो गर्भित आस्ते । इति हि यास्काचार्याणां मतम् । परं आनन्दतीर्थाः प्रतिमन्त्रं अर्थत्रैविध्यं वर्तते वेदवाक्येषु इति पौराणिकवचनोदाहरणपूर्वकं प्रास्थापयन् । अयमेव च अभिप्रायः श्री सायणाचार्यैरपि रूपांतरेण अङ्गीकृतः प्रतिपादितश्च । 'अस्य वामस्य' (ऋ. १–१६४–१) इति वामनसूक्तस्य प्रथममन्त्रस्य भाष्यलेखनप्रसङ्गे यज्ञविनियोगपरतया परमात्मपरतया आध्यात्मपरतया च अर्थं व्यावर्ण्य अन्ते "एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यं परं तथापि स्वरसत्वाभावात् ग्रंथविस्तरभयाच्च न लिख्यते । यत्र द्वा सुपर्णा इत्यादौ स्फुटमाध्यात्मिको अर्थः प्रतीयते तत्र तत्र प्रतिपादयामः' इति वैदिकमन्त्राणां अर्थत्रैविध्यं पर्यायेण अनुमोदन्ते सायणाचार्याः । तथा अरविंदमहर्षयोऽपि 'केवलभौतिकदैविकार्थौ अपहाय अन्यः कोऽपि आध्यात्मिकतत्वयुक्तः रहस्यार्थोऽपि वेदमंत्रेषु निगूहितो वर्तते' इति संसाधयंति । अमुमेव चार्थं दयानंदोऽपि 'सत्यार्थप्रकाशे' सयुक्तिकं प्रतिपादयति ।

परं प्राचीनकाले शिखा-यज्ञोपवीतादिकं परित्यज्य प्रवृत्तिपथाद्दूरतोऽपसृत्य परमहंसाश्रमं स्वीकृत्य पारमार्थिकपथपथिकानां यतीनां मध्ये मध्वादन्यः न कोऽपि टीकां व्याख्यां वा लिलेख । एकदा वेदादिकं परित्यज्य यदा सन्यासाश्रमः स्वी क्रियते

  

ततः वेदमंत्रोच्चारणमपि नैव कार्यमिति बहूनामेव यतीनां वादः मया बहुधा श्रुतः । अत एव तैः गायत्र्यादिमंत्रवर्णानामप्युच्चारणमपि नैव क्रियते । "ऋचैव होगं कुर्यात् यजुषा अध्यनं साम्नोद्गीथं" इति ऐतरेय ब्राह्मणवचनानुरोधेन सर्वेपि मंत्राः यज्ञार्था एव न मोक्षार्थाः । गीतोपनिषद्ब्रह्मसूत्राण्येव हि मुमुक्षुसमपेक्षणीयानि सच्छास्त्राणि नाम । अत एव 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इत्यादिना वेदवादो न्यषेधि गीतामृतदुहा पार्थसारथिना । अतो मोक्षार्थं गृह्यमाणसन्यासाश्रमैः यतिभिः वेदाध्ययनाध्यापनटीका विवरणव्याख्यानादिकं नैव कर्तव्यमिति दृडमभिप्रयन्तः पण्डिताः पूर्वं भूयांस एव आसन् । अथापि आनंदतीर्थाचार्याः वेदानां प्रथमं सर्वश्रेष्ठं च भाष्यं विलिख्य वेदभाष्यकृतीनां यतीनां आद्या आचार्याः समभवन् । श्रीविद्यारण्याः पञ्चशतीति स्वकृतकृतिरत्ने वेदमंत्रानुसारेण कांश्चन श्लोकान् निर्ममिरे । परं तत्र स्वाभिप्रायपुष्टीकरणाय संवादितया श्रुतिमन्त्राः केचिदुदाहृताः । न तु वेदव्याख्या तत्र कृता । सुव्यवस्थितरीत्या स्वप्रतिभाप्रभावबलेन सर्वावेदशाखा उपनिषदः श्रुतिस्मृतीश्च सम्यक् समालोडच इदंप्रथमतया वेदभाष्यकत्वश्रेयः श्री मध्वाचार्यादन्यं न कञ्चन स्वामिनमुपस्पृति ।

श्रीमदाचार्याः ऋग्भाष्यप्रारम्भे सकलवेदार्थसारभूतव्याहृत्यर्थकोङ्कारप्रतिपाद्यं प्रणवरूपिणं परमात्मानं संस्मृत्य वेदाधिकारसिद्ध्यर्थं सर्वैरप्यादौ अवश्यं जपनीयस्य गायत्रीमन्त्रस्य सदर्थनिर्वचनं कुर्वन्ति–

**ओमशेषगुणाधार इति नायरणोप्यसौ । पूर्णोऽति भूतिवरोऽनन्त सुखो यद् व्याहृतीरितः । गुणैस्ततः प्रसविता वर्णीयो गुणोन्नतेः । भा इति रतिरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः । प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ इतीरितः ।**

एवं वेदवेद्यः वेदवन्द्यः गायत्रीगीतः एव भगवान् पुरुषसूक्तप्रतिपाद्यः परमः पूरुषः पुरुषार्थश्चेति व्यवस्थापितमाचार्यैः। "संपूर्णत्वात् पुमान्नाम पौरुषे सूक्त ईरितः । स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च। स एव सर्वशब्दार्थ इत्याहोपनिषत् परा।" एवं सर्वतन्त्रस्वतन्त्रस्य सर्वत्रव्याप्तस्य भगवतः अग्न्यादिविभूतियोगं अग्न्यादिशब्दानां तात्विकार्थं सात्विकभावरूपं च पुरस्तादुद्ग्रन्थांतरप्रमाणजालोदाहरणपूर्वकं उपन्यस्य वेदैकवेद्यत्वं वेदांतबोध्यत्वं जिज्ञासैकसाध्यत्वं निरवद्यत्वं च व्यवस्थापितवन्तः।

अस्य ऋग्भाष्यस्य श्री जयतीर्थयतींद्रविरचिता टीकापि वर्तते । तस्याश्च टीकायाः छलारीनरसिंहाचार्यनामानः पण्डितोत्तमाः टिप्पणीमेकां कृतवन्तः । एवं मन्त्रालयस्वामिभिः श्री राघवेंद्रतीर्थैरपि स्वतन्त्ररीत्यैव 'मन्त्रार्थमञ्जरी' नामको अपूर्वः ग्रंथो विरचितः । तत्र श्रीमदाचार्याणां अभिप्रायानुगुण्येन तावतामेव मंत्राणां आशयः अतीव हृदयङ्गमया भङ्ग्या समञ्जसरीत्या सरलशैल्यां निरूपितः । एते सर्वे ग्रन्थाः वेदार्थनिर्णयने अतीव उपकुर्वंति। नवीनतममेव इतराचार्यैरक्षुण्णं ज्ञानप्रकाशकरं मार्गमुपदर्शयन्ति । तदेतेषां उपयोगः न केवलं माध्वैः अथवा न केवलं वैष्णवैः किन्तु वेदरहस्यावबुबोधयिषुभिः तत्वजिज्ञासुभिः वेदपुरुषमवजिगमिषुभिः सर्वैरपि अवश्यमेव कार्य इति सम्प्रार्थ्य विरम्यते ।

(कर्णाटककुलपुरोहितैः श्री. आलूर वेंकटरावमहोदयैः कर्णाटकभाषायां प्रकाशितस्य 'श्री माध्वऋग्भाष्यप्रशस्तिका' नाम्नः पुस्तकस्य भावसारः अत्र संक्षेपेण अनूदितः ।)



# महीशूरमहाराजस्य गुरुप्रसादः



२६–१०–५५ तमे दिनांके उत्तरकर्णाटकसंचारार्थं समागतः मैसूरमहाराजः श्रीजयचामराजेंद्रभूपालः अत्रैव धारवाडनगरे परमहंसपरिव्राजकाचार्य जगद्गुरु श्री कूडलीशृङ्गेरीमठाधीश श्री सच्चिदानंदभारतीमहास्वामिनः वसन्तीति विज्ञाय संदर्शनार्थं सादरं समागतः। संस्थानसर्वाधिकारिणः तथा प्रतिष्ठितपुरप्रमुखाश्च महाराजाय राजोचितं सुस्वागतं चक्रुः। ततः देवतासन्निधौ मङ्गलार्तिक्यादिकं दृष्ट्वा वेदोक्ताशीर्वादान् परिगृह्य जमखण्डीमहाराज्ञ्या समर्पितं रजतसिंहासनं मिरजराजकुटुम्बेन समर्पितं रजतपादपीठं च दृष्ट्वा सिंहासनासीनानां गुरूणामाज्ञानुसारं क्लप्ते आसने समुपाविशत् महाराजः। ततः महाराजेन सश्रद्धं प्रणामपर्यस्तमस्तकेन काश्मीरीयोर्णवस्त्रद्वंद्वं निधिश्च महासन्निधाने सादरं समर्पितः। ततः संस्थानसर्वाधिकारिभिः श्री गोविन्दशर्मभिर्दिव्यपीतांबरं परिधापितः श्री महाराजः। अन्ते च श्री चरणैः 'शुभाशीः पञ्चकं' सद्यो विरच्य

 

अनुगृहीतः अभिनन्दितः शुभसन्दितश्च कृतः कृतकृत्यो महीशूर-महीपतिः । तानीमानि पञ्चामृतरसप्रपञ्चनचञ्चूनि विरिञ्चि-चञ्चलाक्षीविपञ्चीपञ्चमसमधुरिमोदंचनचणचारिमभूम्ना चम-त्कुर्वंति अतिहृद्यानि निरवद्यानि सद्योरचितानि पञ्चपद्यानि आस्वाद्यन्तां शुद्धिबुद्धिभिः प्रबुद्धवाचकैः ।

सन्तोषस्यातिरेको जनमनसि सुसन्दृश्यते चाऽऽसमन्तात् ।
राजन्वन्तं विजानात्यखिलजनततिर्मोदतः स्वं प्रदेशम् ॥
नाम्ना "मैसूरुराज्यं" बहुवितितमभूद्दिक्षु सर्वासु चाद्य ।
श्रीरामस्येव यस्य स्वसुकृतबलतश्चामराजस्स जीयात् ॥१॥

राजन्ते सकलाभिगामिकगुणाः श्रीचामराजे नृपे ।
तेनाऽशेषजनान् स्वकीयवशगानेषोऽकरोल्लीलया ॥
प्राप्यैतत्फलभूतविस्तृतमहाराज्यं प्रशासंश्च तत् ।
पुण्यश्लोकवरस्समाननृपतिष्वेष प्रभुर्द्योतताम् ॥२॥

गुर्वी राज्यस्य धूस्तां नववयसि वहन् क्लांतचित्तोऽपि नित्यम् ।
शांतिं सम्पालयन् संव्यवहरति सदा रञ्जयन् सुप्रजाः स्वाः ॥
तत्वज्ञानस्य चैतत्फलमिति विदितं "ज्ञानिना कर्तुमेषा ।
शक्या राज्यादिलोकव्यवहृति"रिति संप्राहुराचार्यवर्याः ॥३॥

एतद्वंशीयभूपा बहुविधतपसाऽनादिकालात् स्वदेशं ।
नीत्याऽ रक्षन् प्रजाः स्वाः सममतय इति स्पष्टमेतच्चरित्रम् ॥
प्रामाण्यं यन्मुनीनां पदविदभिहितं चोत्तरं चोत्तरं च ।
तद्वद्राज्ञां यदूनां सुजनवर मनोरञ्जने रीतिरग्र्या ॥४॥

श्रीमन्मैसूरुराज्यप्रभुवरसुपदे चामराजो जयाद्यः ।
स्वर्णे रत्नं यथैवं विलसतु सुचिरं कालमीशप्रसादात् ॥
भूयासुर्वै पुरस्तादपि यदुकुलजा एव सर्वे महीपाः ।
वंशोऽयं शाश्वतोऽस्तु प्रथितनृपतिभिर्युक्त आचन्द्रतारम् ॥५॥

( सम्पादकीयम् ४ पुटादनुवृत्तम )

परं भाषान्धास्ते रोषांधा इव स्वाभिमानातिरेकेण तामगणयित्वैव स्वसाहित्याभिवृद्धये प्रयतन्ते । अतः सर्वभाषासमानदृष्टिना केंद्रसर्वकारेण इयं संस्कृतभाषा केंद्रभाषा एवेति विभाव्य सा संभावनीया । केंद्रेण संस्कृतभाषाप्रोत्साहनाय स्वशक्तिसर्वस्वं केंद्रीकरणीयम् । इतरभाषाप्रोत्साहनाय तत्तत्प्रांताः विद्यंत एव । ते च निषिद्धा अपि नैव मुंचन्ति स्वस्वभाषाप्रोत्साहनम् । परस्परस्पर्धया स्वस्वभाषाणां अत्युत्कृष्टत्व विशिष्टत्वादिप्रदर्शनाय प्राणप्रणेनापि प्रयतन्ते । तत्तद्भाषाणां सर्वतोमुखीं च पुरोगतिं समुत्कर्षं च साधु संसाध्नुवंत्येव सत्वरम् । तदर्थं केंद्रसर्वकारस्य प्रयत्नः प्रेरणं प्रचोदनं प्रोत्साहनं वा नैव आवश्यकम् । अतः केंद्रसर्वकारेण तदेव प्रथमतः कर्तव्यम् यद् आवश्यकमपि इतरप्रांतीयैः पर्याप्तप्रमाणेन नैवानुष्ठीयते । अर्थात् संस्कृताभिवृद्धये प्रादेशिकशासनमण्डलैः सविशेषं गमनं सातिशयमवधानं च नैव दीयते । उदस्तायां च तस्यां सर्वा अपि भाषा अस्तमिता एव स्युः । अतः तस्याः संस्कृतभाषायाः सर्वांगीणाभिवृद्ध्यर्थं केंद्रसर्वकारेण प्रयत्नस्य पटाकाष्ठैव समाकलनीया। संस्कृतप्रोत्साहनेनैव इतराः सर्वा अपि भाषाः पोषिताः प्रोत्साहिताः उत्कर्षमापादिताश्च स्वत एव सम्भवेयुः । अतः केंद्रसर्वकारेण स्वद्रव्यव्ययेन दिल्यां एकं महत् संस्कृतग्रन्थभांडागारं निर्मितव्यम् । तथा इतरवैदेशिकभाषागतानां सर्वासामपि वैज्ञानिकविद्याशाखोपशाखानां संस्कृतीकरणाय प्रयतनीयम् । संस्कृतविश्वविद्यालय एकः स्थापनीयः । तत्र संस्कृते एव सर्वाविद्याः शिक्षणीयाः । एवं जागतिकज्ञानराशिः यद्येकदा संस्कृतमञ्जूषिकायां कथंचिन्निहितश्चेत् तदा इतरभाषाणां तदुपयोगः सुलभयैव कर्तुं शक्यते । अतः भारतसर्वकारेण प्रातिस्विकरूपेण संस्कृतपंडिताः संस्कृतग्रन्थाः संस्कृतकवयश्च सविवेषं पुरस्कार्याः पारितोषकपदवीप्रमाणपत्रवेतनदानादिभिः प्रोत्साहनीयाः । तेन संस्कृतस्य तन्मुखान्तरम् इतरभाषणामपि अभिवृद्धिः अचिरादेव संभवेदिति संसूच्य विरमामो विस्तराद्धिति शम् ।

# भारतीयानां गूढलेखनकलामयी भाषा

रोमनाः, गाथाश्च १५०० वर्षेभ्यः पूर्वमेतत्कलायाः प्रयोगं कुर्वंति स्म । १६०५ ईसाब्दे ब्रिटेनस्य फ्रांसिस बेकनेन अप्येतादृश्येका भाषा आसीन्निर्मिता । फ्रान्से नेपोलियनोऽपि युद्धावसरे एकस्या एतादृश्या भाषायाः प्रयोगं करोति स्म ।

भारते गूढलेखनकलामय्या भाषायाः प्रयोग ईसाब्दाच्छतशो वर्षेभ्यः पूर्वं भवति स्म । वात्स्यायनकृतकामसूत्रस्य प्रथमाधिकरणीये तृतीयेऽध्याये चतुःषष्ठि (६४) कलानां निर्देशः । तत्रैकस्याः कलाया नाम 'म्लेच्छितविकल्प' इति । साधुशब्देभ्यः संपाद्यमानो लेखः अक्षराणां व्यस्तीकरणात्, परिवर्तनाच्च अस्पष्टो जायते स 'म्लेच्छित' इत्युच्यते । सर्वेभ्यो गुप्तीकृतस्याभीष्टार्थस्य व्यक्तिविशेषे प्रकटीकरणमेव 'म्लेच्छितविकल्प' भाषाया लक्ष्यम् । अयं 'गूढलेख' इत्यप्युच्यते । कामसूत्रस्य 'जयमंगली' टीकायां यशोधरेण अत्रोत्तमः प्रकाशो न्यपाति । तत एव ज्ञायते यदस्याः कलायाः त्रय आचार्या अभूवन् । एष्वेव अर्थशास्त्रप्रणेता आचार्यकौटिल्यस्तथा 'चौर्यशास्त्र'प्रणेता आचार्यमूलदेवोऽपि । तृतीयस्य मतमुद्धृतं तत्र, परं न नाम ।

कौटिल्येन अर्थशास्त्रस्य प्रथमाधिकरणीये द्वादशेऽध्याये गुप्तचरा वर्णिताः । तत्र तैः स्वसमानधर्मेभ्यो गूढलेख एव प्रहेय इति परामृश्यते । एतदर्थं तादृशलेखनस्य नाम तत्र 'संज्ञालिपिरिति' दत्तम् । कौटिल्येन तल्लिपेर्निर्माणप्रकारोऽपीत्थमुक्तः—

> तादेः क्षांतस्य कादेश्च स्वरयोरुभयोरपि ।
> बिन्दूष्मणोर्विपर्यासाद् दुर्बोधमिति संज्ञितम् ॥

वर्णमालायाः श, ष, स, ह इति वर्णानां त्यागात् ३० वर्णा अवशिष्यन्ते । इमे १५-१५ खंडद्वये वियोक्तव्याः । अर्थात् 'क'त आरभ्य 'ण' पर्यंतं प्रथमः खंडः, 'त'त आरभ्य 'ज्ञ' पर्यंतं द्वितीयः

खंड:। प्रथमखंडीयाक्षराणां स्थाने द्वितीयखंडीया वर्णाः स्थापनीयाः क्रमतः। 'ह्रस्वदीर्घ' स्वरयोरपि परिवर्तनं करणीयम्। ह्रस्वस्य स्थाने दीर्घः, दीर्घस्य च ह्रस्वः स्थापनीयः। चतुर्णां बिन्दूनामनुस्वार, विसर्ग, जिव्हामूलीयोपध्मानीयानां स्थाने श, ष, स, ह इति वर्णाः स्थापनीयाः। इत्थं संज्ञितलिपिर्निर्मीयते।

मूलदेवो वदति– एतावतां वर्णानां परिवर्तनमनावश्यकं ! तस्य मतेन–

अकौ खगौ घङौ चैव चटौ ञणौ तथौ नमौ।
यशौ रषौ लसौ चेति मूलदेवीयमुच्यते॥

अर्थादुक्तवर्णयुग्मकेन परस्परम्परिवर्तितेन भवितव्यम्। अवशिष्टा वर्णा यथावत् स्युः। स्वरेषु, विसर्गानुस्वारादिष्वपि च परिवर्तनमनावश्यकम्।

नामहीनस्तृतीय आचार्य इत्थं वदति–

ग्रहनयनवसव एते षडाननाक्षाणि सागरामुनयः।
ज्वलना गण्डकशृङ्ग– दुर्लिखित गूढलेख्यमिदम्॥

एतदनुसारं ग्रह ९, नयन २, वसु ८, षडानन ६, अक्ष (इंद्रियगणाः) ५, सागर ४, मुनि ७, ज्वलन (अग्नि) ३, गंडकशृंग १, इत्थं वर्णव्यत्ययात् गूढलेख्यमेतत्। एतदनुसारं प्रथमाक्षरस्थाने नवमः, द्वितीयः स्वस्थाने, तृतीयस्थाने अष्टमः, चतुर्थस्थाने षष्ठः, पंचमः स्वस्थाने, षष्ठस्थाने चतुर्थः, सप्तमः स्वस्थाने, अष्टमस्थाने तृतीयः, नवमस्थाने च प्रथमो वर्णो भवत्यत्र।

इत्थं 'रिपुरायाति, पलायस्व' इति वाक्यं तृतीयपद्धत्या 'स्वपुयपति यालारारि' इति, मूलदेवपद्धत्या 'लितुषाशापितसाशल्व' इति, कौटिल्यपद्धत्या च 'ठीचूठटकी चाडताः कढ, इति। इह कौटिल्यपद्धतिः कठिना प्रतीयते।

—संस्कृतसौजन्यात्

Regd. No. B 7171



# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणकपोस्टटिकीटप्रेषणं कार्यम् ।

व्हीं. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डरद्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्यमयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

To,
Shree. Shankardev Vidyalankar,
Shantikutir, Gurukula
Kangri
Dist. Shaharanpur.




348

From :
पंढरीनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग (कर्णाटक)

Printed at the Hombali Printery, Gadag by H. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

पर्यायपीठाधीशश्रीविबुधेशतीर्थस्वामिपादानां कृपापोषिता



# मधुरवाणी



उडुपी श्रीकृष्णमठद्वारा संचालिता ।







एकाऽभूत् प्रखरा परा च मुखरा नीला च लोलाऽपरा ।
योषाऽन्या परुषा रुषा निरगमत् त्यक्त्वा निजं पूरुषम् ॥
इत्थं मानुषयोषितां परिणयत्रस्तेन योढोद्विजे- ।
त्येषाऽब्धौ कलशीसमुत्थतुलसी भूत्यै हरेः प्रेयसी ॥

**मासावतरणिका**

नष्टाऽशेषकृषिर्गृहा निपतिता वृक्षाश्च निर्मूलिताः ।
आपूरः पयसां नृणामिह नदीपात्रेषु नेत्रेषु च ॥
वृष्ट्या कष्टदशामिता जलपरिक्लिष्टाश्च सर्वे जनाः ।
केनार्ति कुरुषे हि कार्तिक! कृतानर्थोऽपि सार्थोऽभिधा ॥

सम्पादकः प्रकाशकश्च

**पं. पण्ढरीनाथाचार्यः गलगली**

वार्षिकमूल्यम् (५) रूप्यपञ्चकम्

**१९५६ नवम्बर (कार्तिक)मासस्य सञ्चिका गदग**

# मधुरवाण्याः संरक्षकाः

श्री श्री विबुधेशतीर्थाः अधमारुमठ, उडुपी — प्रतिवर्षं ५०५ रू. प्रदाः
श्रीमन्तः पद्मनाभराव वैद्य महोदयाः — ,, ५०५ ,,

प्रतिवर्षं १०१ रू. प्रदाः मधुरवाण्याः महासंरक्षकाः

श्री श्री भंडारगिरिमठाधीश-स्वामिपादाः
श्री श्री कूडलीशृंगेरीमठाधीश-स्वामिपादाः
श्री श्री पेजावरमठाधीश-स्वामिपादाः
श्री श्री शृंगेरीपीठाधीशश्रीमद्-अभिनवभारतीतीर्थस्वामिपादाः
श्री श्री स्वादीमठाधीश-स्वामिपादाः
श्री श्री द्वारकामठाधीश-श्री शङ्कराचार्यस्वामिपादाः
श्री सी. डी. देशमुख, भूतपूर्व भारतगणराज्य वित्तमन्त्रिणः

## विषयानुक्रमः

# मधुरवाणी

द्वितीयवर्षे ] श्री दुर्मुखिसं. कार्तिकसञ्चिका [ अष्टमोऽङ्कः

सम्पादकीयम्

## संस्कृतायोगः

महीयानेव हि व्यतीयाय सम्भ्रान्तिमयः समयः समधिगतस्य स्वातंत्र्यस्य । एतस्मिन्नवसरे राष्ट्रस्य सर्वाङ्गीणाभिवृद्धिं सिषाधयिषुभिः लोकप्रतिनिधिभिः भूयस्य एव हि महीयस्यः लघीयस्यः श्रेयस्यश्च परस्सहस्रा एव योजनाः विहिताः विधीयन्ते च । तानि एव च विश्वप्रशंसाभाजनानि नैकविधान्यायोजनानि समग्रभारतस्य भोजन-वसन-भवन-शिक्षणादिसर्वविधसौकर्यसौलभ्यादीनुपकल्पयितुमलं भवंत्येव । एतैश्च नवनवीनैर्योजनशतैः अचिरादेव इयं हिन्दूबन्धूनां दारिद्र्यधुरन्धरा भारतवसुन्धरा नंदनवनी एव संपत्स्यते इति उत्स्वप्नोत्सवाननुभवन्ति नित्यमेव नवयुगनायकाः ।

परं वस्तुतो भारतस्य किंबहुना विश्वस्यैव उद्धारं उन्नतिं उत्कर्षं च संसाधयितुं क्षमा देवगवी लब्धेऽपि स्वाराज्ये, प्राप्तेऽपि स्वातंत्र्ये नानुवीक्ष्यते नाभिलक्ष्यते च इति हंत नाद्यापि सन्निहितः भारतस्य भाग्योदयसमयः । नाधुनापि निरवशेषं निरस्तः राष्ट्राभ्युदयप्रतिपंथी प्रत्यूहव्यूहः । तदर्थं मधुरवाण्या नैकवारं सविनयं सूचितः सानुनयं याचितः सरोषं तर्जितः सस्नेहाभिमानं च बोधितोऽपि भारतसर्वकारः पाषाण इव जोषमासीनः न रोषं नापि

त्वेषं नापि तोषं अथवा नान्य कीदृग्विधमपि वा भावविशेषमध्यगच्छत् । ततः मधुरवाणीसंपादकेन तिरुपतिक्षेत्रे गतवर्षे संवृत्तायां विश्वपरिषदि राष्ट्राध्यक्षराज्यपालानां पुरस्तादेव स्वयंवृतेन पंडितमण्डलीप्रातिनिध्येन पांचजन्यं पृथगेव आध्मातम् । मधुरवाण्याः अग्रलेखेष्वपि संपादकस्य चारुवाक्चंद्रहास चिरं चमदकरोत् । तेन अन्यप्रयत्नैश्च अन्ततः प्रबुद्धा इव दृश्यते हस्तिनादप्रबोधिनी शासनसंस्था ।

अद्य प्रबुद्धः भारतसर्वकारः तुङ्गप्रज्ञाविस्मापितांगिरसस्य वङ्गीयविद्वत्पुङ्गवस्य श्री सुनीतिकुमारचटर्जीमहोदयस्य आध्यक्ष्ये संस्कृताभ्युदयप्रयोजकोपायपरिशीलनाय कामपि एकां समितिं विरचयति । स च संस्कृतायोग इति ख्यातः युक्तायुक्तविचारपटुपण्डितमुकुटमणिघटितः शिष्टकूटः इदानीं स्वकार्यं प्रारभत इति श्रुणुमः । नैकप्रश्नमालिकाः निर्माय तदुत्तरग्रहणाय महासंघसंस्थाभ्यः प्रेषिता एव प्रश्नपत्रिकाः ।

**पुनरपि स एव प्रमादः**

यः प्रमादः विश्वसंस्कृतपरिषत्कार्यकर्तृभिः, अखिलभारतसंस्कृतसाहित्यपरिषत्संचालकैर्वा बुद्धिपूर्वकमनुष्ठितः अनुष्ठीयते च अद्यापि, येनैव च दोषेण आलीढत्वात् उभे अपि महाजनपरिगृहीते अपि संस्थे व्यर्थे निरुपयुक्ते निष्प्रयोजने अकिञ्चित्करे अथाद् अर्थक्रियाकारिण्यौ न भवतश्च, केवलमधिवेशनकालीनसभामण्डपिकास्तम्भालम्बादिसम्भारमात्रैरेव स्वास्तित्वं ज्ञापयंति तमेव महापराधं शिष्टाधिष्ठितमंडली संततनीतीति हन्त संतप्यतेऽस्मदन्तरङ्गं । मान्याः ! यदर्थोऽयं प्रयासः ! किमर्थोऽयं महान् द्रव्यध्वंसः सर्वकारस्य? कुतो वाऽयं संस्कृतायोगस्य भारतव्यापि प्रयत्नाडम्बरः । संस्कृतस्य उद्धारार्थं सुरभाषायाः प्रचारोपाय-

परीक्षणार्थं । आम् । कः संस्कृतोद्धारप्रयत्नोपायशतानि सन्दर्शयेत्? किं लौकिक-आंग्लस्कूल-कॉलेजप्राध्यापकाः उत संस्कृतज्ञाः संस्कृतप्राणाः संस्कृतरक्ताः संस्कृतेनैव च श्वासोच्छ्वासं कुर्वाणाः संस्कृततादात्म्यापन्नाः पण्डिता वा इति भवन्त एव ब्रुवन्तु । ये खलु भोगं त्यक्त्वा रागं हित्वा त्यागं कृत्वा मनोयोगं च दत्वा स्वसर्वस्वयागमपि कृत्वा संस्कृतरक्षणाय प्रयतितवन्तः प्राणानपि त्यक्तवन्तः यैश्च दशद्वादशवर्षान् स्वयमधीत्य ततः त्रुटितैककपर्दिकामपि समाजाद्वा सर्वकाराद्वा कदाप्यनपेक्ष्य अनवेक्ष्यैव भूयांसः छात्राः अन्नवस्त्ररक्षादीक्षादिभिः शिक्षिताः तादृशाः मौनमुनयः वाङ्मयतपस्विनः यदि नाकार्यन्ते न विचार्यन्ते नाहूयंते च तदा व्यर्थैव स्यादियं आयोगस्य प्रयत्नपरम्परा । सर्वकारस्य सहवासमहिम्ना संस्कृतपण्डितघटितापि आयोगसमितिः 'संस्कृतोन्नतये के के प्रयत्नाः करणीयाः संस्कृतस्य नवराष्ट्रे स्थानं किं मानं किं' इत्यादीन् पुङ्खानुपुङ्खमुट्टङ्कितान् शताधिकशङ्काशंकून् संस्कृतज्ञानविधुराणां सरस्वतीशत्रूणामेव पुरतः निक्षिपति ।

## संस्कृतायोगः विस्मरति

**संस्कृतायोगः विस्मरति यत 'स्कूल, कॉलेज, कोर्ट, कचेहरी, कौन्सिलादीनां आकारेभ्यः बहिरेव वस्तुतः शुद्धसंस्कृतपण्डिता उपलभ्यंते । संस्कृतसारस्वतसारस्वते आपातालनिमग्न (पी) वरतनुमनोमनीषाः ते खलु मनीषिणः संस्कृतस्य अद्यतनं स्वास्थ्यं वा दौस्थ्यं वा ततश्च उद्धारदिशां संस्करण-परिष्करण-पुरस्करण-प्रचारण-प्रगमन-प्रोन्नमनादिपद्धतिप्रकारांश्च सद्यं निरूपयितुं समर्था इत्यत्र मात्रयापि नास्त्येव विप्रतिपत्तिः । परं इदानींतना आंग्लाध्ययनप्रभावित अध्यक्षाधिष्ठिता इयं आयोगमण्डली दीनदीनानां चिक्कणशीर्षाणां शिखामुखानां शुचि *पञ्जिकाञ्चितानां वैदिकवर्षिष्ठानां दर्शनमात्रादेव**

* स्नानवस्त्रं पञ्जा इति लोकभाषायां ख्यातम्

जुगुप्सते । नवनवेषादिभूषितानां वक्रीकृतसीमन्तसुन्दरवदनारविंदानां आंग्लभाषायां संस्कृतस्य महिमानं गायतामेव नव्यसंस्कृतपण्डितानां कॉलेजाध्यापकानां विश्वविद्यालयाचार्याणां एम.ए., पी.एच.डि. पदवीभूषितानां हावभावभाषाभङ्गीभाषणघोषणैरेव मुग्धाः तानेव बृहस्पतिभट्टारकान् मन्यन्ते । तानेव विचारयंति तदुक्तमेव प्रमाणतया परिगृण्हंति । ते च वस्तुतः संस्कृतस्य मर्मानभिज्ञाः तस्याः सत्वं महत्वं च किमपि अजानानाः पृष्टैश्च 'अस्माभिः किमपि वक्तव्यमिति' किमपि किमपि यद्वा तद्वा उत्तरंति । तदेव च तथ्यमेति गृण्हानैः मृत्पिंडमतिभिः तथैव सर्वकार्यं विनिर्दिश्यते । तदनुसारं कृतेनापि उपायेन संस्कृतस्य वा संस्कृतज्ञानां वा उन्नतिर्वा उत्कर्षो वा न कदाचिदपि शक्यसम्भवः । अतः संस्कृतस्य शर्म अभीप्सुभिः कर्मवीरैः प्रथमतः तन्मर्म अवगन्तव्यम् । रोगनिदानमकृत्वा विहिता सर्वाऽपि औषधयोजना वैफल्यशल्यमेव अनुभावयति । अतः संस्कृतस्य अवनतिः कथं जाता ? कुतो जाता ? कथं पुनः तदुन्नतिः सम्भवित्री ? संस्कृतोन्नतिर्नाम किम् ? केऽत्र उपायाः ? कथं च तेऽनुष्ठेयाः इत्यादिसर्वं विविच्य विचार्यैव संस्कृतोन्नयनकार्ये प्रवर्तनीयम् । ईदृशसर्वङ्कषसम्मर्शनं कर्तुं संस्कृतस्य औरसलन्ततीभूताः विद्वांस एव प्रभवेयुः । आयोगेन तादृशाः पंडिता एव अत्र विचारणीयाः । न ते स्वयमागत्य स्वाभिप्रायानावेदयंति । 'न रत्नमन्विष्यति मृग्यते हि तत्' । सन्त्येव तत्र तत्र घोषग्रामपट्टिकासु प्रसिद्धिपराङ्मुखतया संस्कृतसेवां कुर्वाणाः भूयांसो विद्वांसः । तान् सानुनयं सविनयं च आकार्य पुरस्कृत्य नमस्कृत्य च यदि विचारविनिमयः क्रियेत तदा सुरभाषाप्रसारणार्थं सुगममार्गः अन्विष्टो भवेत् ।

किञ्च संस्कृतसंसारस्य सर्वपरिस्थितिः संस्कृतपत्रिकासम्पादकानां यथा सामस्त्येन अवगता वरिवर्ति न तथा कस्यापि सर्वज्ञस्य। आयोगे तदर्थं द्वित्राः संस्कृतवृत्तपत्रसम्पादकाः अवश्यं सन्निवेशनीया एव । तेन संस्कृतप्रपञ्चस्यैव स्थितिगति प्रगति समुन्नति प्रसृति प्रभृतिनानोद्देशसफलीकरणोपाययोजना सुगमा भवेत् । अस्त्वेतत् । तदत्र सर्वैरपि पण्डितैः आयोगप्रश्नावलीं आदाय यथामति उत्तीर्य आयोगकार्यं यथा यशस्वि भवेत्तथा प्रयतनीयमिति शम् ।



  

# "संस्कृतसाहित्ये देशप्रेम"

प्रा. टि. जि. सिद्धप्पाराध्याः एम् ए, चामराजेंद्र सं. कॉलेज, बेंगळूर

संस्कृतसाहित्ये देशप्रेम विशालभावनया समुचितया रीत्या उपवर्ण्यते, "जननीव जन्मभूमिः स्वर्गादपि गरीयसी"ति संस्कृत-साहित्यं स्वदेशं प्रशंसति, विंध्य-हिमाचलयोर्मध्ये विद्यमानं भारतं देशं 'पुण्यभूमिरिति' अमरसिंहः प्रस्तौति, इयं हि पुण्यभूमिः सर्वेषां पूज्या, वन्दनीया माननीया च ।

**अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।**
**यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥**

इति स्वदेशस्य गरिमाणं श्रेष्ठतां महिमानं च अन्वर्थकतया प्रख्यापयति संस्कृतसाहित्यम् । अयं च भारतोदेशः कर्मभूमिः न हि भोगभूमिः, कर्मनाम निःस्वार्थसेवा भगवत्प्रीत्यर्थं आचरणीयो यज्ञः । एतादृशं कर्म यत्र आचर्यते तत्र सर्वाः देवताः विशेषतो निवसन्ति प्रीयते च । सम्प्रीताश्च देवाः जनानां हितं सुखं च अनुगृण्हन्ति । यत्र मानवाः यज्ञरूपं कर्म अनुतिष्ठन्ति तत्रैव निवसंति सर्वाः संपदः, एतदेव प्रशस्तं कर्म सच्छब्देन व्यपदिश्यते गीतायां श्रीकृष्णपरमात्मना । एतादृशानि, सेवा-त्यागरूपाणि कर्माणि बहोः कालादारभ्य भगवत्प्रीत्यर्थमेव आचरन्तः अनेके महात्मानः भारते विद्यन्ते ।

**एतान्यपितु कर्माणि संगं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥**

इति भगवानेव उपदिशति गीतायाम् । कर्तव्यदृष्ट्या सकलव्यव-हारनिर्वाह एव भगवतः प्रियतमः समीचीनश्च आर्यमार्गः, तदा-नीमेव अस्मत्कृतं कर्म अस्मान् न बध्नाति । यज्ञशिष्टामृतभुजो वयं भारतीयाः इहैव भगवत्प्रसादं लब्ध्वा सुखिनः शांताश्च वर्तामहे । न वयं पदार्थान् भोक्तुं अत्र जाताः, किन्तु भगवदनुगहीतान्

पदार्थान् भक्त्या निर्मलेन मनसा भगवते समर्प्य तत्प्रसादमनु- भवितुं वयमत्रागताः । अयं च शिष्टाचारः ।

**इष्टान्भोगान्हि वो देवाः दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥**

एवं भगवदनुगृहीतानि भोग्यवस्तूनि भगवते असमर्प्य ये आत्मार्थमेव उपयुंजते तेहि पापिनो दुःखिनश्च भवन्ति ।

**यज्ञशिष्टाशिनः संतः मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापाः ये पचन्त्यात्मकारणात् ॥**

एवं भगवत्प्रसादजीविनो भक्तिमन्तश्च भारतेयाः आत्मविश्वा- सेन सर्वान् व्यवहारान् निर्लिप्ततया निर्वहन्तः शांता वर्तन्ते। अशांतेरवकाश एवात्र न परिकल्प्यते । अत एवाऽयं देशः पुण्य- भूमिरिति अन्वर्थनामा सर्वजीविनः आत्मीयतया आकर्षति, प्रीण- यति, पुष्णाति प्रोत्साहयति च । अत्र वसन्यः भोगे संसज्जते, सः दुःखभाग्भवति, न तत्र कापि संशीतिर्विप्रतिपत्तिर्वा । अतः इयं कर्मभूमिः सर्वेषां हितावहा सुखयित्री जन्मसाफल्यदायिनी च वर्तते । भोगासक्ताः देशाः कीदृशं दुःखमनुभवन्तः कालं याप- यन्तीति सर्वैर्विदितमेव, कर्मासक्तो हि भारतो देशः यथास्वीयाः जनाः परहितेच्छया निःस्वार्थतया सर्वान्तर्यामिणः परमात्मनः प्रीत्यर्थं व्यवहारान् निर्वहन्ति तथा तान् नियुङ्क्ते, प्रेरयति बोध- यति च–

**एतावज्जन्मसाफल्यं प्राणिनां जीवतामिह ।**
**प्राणैरर्थैर्धिया वाचा यच्छ्रेय आचरणं सदा ॥**

एवं त्रिकरणपूर्वकं परहिताचरणं श्रेयस्साधको मार्ग इति सर्वे विश्वसन्ति । तदेव उन्नतं गम्भीरं उत्तमं च देशप्रेमेत्यभिमतं भारतीयानां । जीवनरङ्गेऽपि तैः तथैव आचर्यते ।

अत एवाऽस्मिन् देशे विविधमतीयाः विभिन्नस्वभावाः विविधाचरणशीलाः जनाः परस्परप्रेम्णा शांत्या समाधानेन च

सुखं वसन्ति । अत्र वसन्तः सर्वे भारतीयाः सत्पुत्राः इति भावना सर्वेषां हृदये विलसति । इयं च भावना अस्मासु रक्तगता वर्तते । "उदारचरितानां तु वसुधैव कुटुम्बकम्" इदमेवहि भारतेयानां विशालं देशप्रेम । यत्सर्वत्र आत्मौपम्येन दृष्ट्वा व्यवहरणं, सर्वेषु आत्मीयतया प्रीणनं कायेन वचसा मनसा च परेषा सुखाय प्रयतनं । एवं विशालं उदारं उदात्तं मधुरं च वर्तते भारतीयानां देशप्रेम, स्वार्थकल्मषस्य लेशोऽपि अत्र न संघटते, त्यागबुद्ध्या सर्वत्रप्रवर्तनं देशप्रेम्णो वैलक्षण्यम् । "त्यागः सुखाय, भोगो नरकाय" न तत्र कोऽपि संशयः । विश्वजनीनोऽयमपि प्रायः । सुखं च भगवत्प्रीतिरेव । सा च सर्वहिताचरणेनैव साध्या भवति ।

**येन केनापि भावेन यस्य कस्यापि जीविनः ।**
**सन्तोषं जनयेत्प्राज्ञः तदेवेश्वरपूजनम् ॥**
**सर्वाभयप्रदानं च सर्वानुग्रहणं तथा ।**
**सर्वोपकारकरणं शिवस्याराधनं विदुः ॥१॥**

इत्थं सर्वेषां सन्तोषोत्पादनमेव ईश्वराराधनं । तच्च अनुद्वेगकरं हितं मितं मधुरं च वचनं । एतच्च वाङ्मयं तप उच्यते । एतदेव देशप्रेमत्वेनाभिमतमत्र । तथाविधं प्रेम अस्माकं अभ्युदयं निश्रेयसं च सम्यक् साधयति ।

एतादृशप्रेमाचरणेनैव अस्माकं दास्यविमुक्तिः सफलीभवेत् स्वातन्त्र्यप्राप्तिश्च सुदृढा हितावहा च भवेत् । तदानीमेव सर्वत्रव्याप्ता अशान्तिः अतृप्तिश्च विनिवार्येत मनसि विराजमानः संशयोपि विनश्येत् अस्मत्सुखसाधनीभूतः आत्मविश्वासश्च संजायेत आत्मगौरवदृष्टिरपि तदानीमेव संवर्धेत, विश्वशांतिसाधिका सर्वहितैकतत्परता यदा सर्वैराचर्येत भारतांबायाः महती संप्रीतिरुत्पद्येत, वेदव्यासमतत्वेन एव ।

भारतीयानां देशभक्तिः वर्ण्यते कैश्चित्प्रामाणिकैः

"प्रायेण मुनयः सर्वे स्वसन्तोषपरायणाः ।
द्वैपायनस्तु भगवान् सर्वभूतहिते रतः ॥
श्रूयतां सिंहनादोऽयं धीरस्तस्य महात्मनः ।
सर्वे भद्राणि पश्यन्तु सर्वे सन्तु निरामयाः ।
सर्वे च सुखिनः सन्तु मा कश्चिद् दुःखभाग्भवेत् ॥"

एवंविधा प्रार्थना सर्वेषां हृदयाकाशे विलसतु विकसतु प्रवर्धतां च ।

प्राचीनैः आर्यैः ऋषिभिः महात्मभिः त्यागिभिः योगिभिः सद्भिश्च आचरितं एतादृशं देशप्रेम वर्धिष्णुभिरस्माभिः सम्यग्ज्ञेयं अनुष्ठेयं च तदानीमेव अस्मत्छ्रेयः साधितं भवेत् भगवदनुग्रहोऽपि लभ्येत, जन्मसाफल्यं च साध्येत, धर्मबुद्धिरपि स्थिरीक्रियेत, आस्तिक्यभावनापि प्रवर्धेत । एतादृशं प्रेम यैः अनुष्ठीयते ते हि नित्यजीविनः भौतिकं देहं परित्यज्यापि अमरं आध्यात्मिकं दिव्यं देहं स्वीकृत्य नित्यं वसन्ति देशभक्तानां निर्मलेषु हृदयेषु तेषां हितबोधनाय सत्प्रेरणाय च । अस्मत्कल्याणं साधितवंतः पूज्याः गांधीमहात्मानः कस्य हृदये न वसंत्यधुना ? अपितु सर्वेषां निर्मलहृदयेषु । ते हि अमराः अस्मान् सर्वान् सत्पथे प्रेरयन्ति यदि वयं तेषु पूज्यभावनया वर्तामहे । "यादृशी भावना यत्र सिद्धिर्भवति तादृशी" । पूज्यैः महात्मभिः आचरितं प्रेम मनसि कृत्वा तथैव अनुष्ठातुं अस्माभिः सर्वदा श्रद्धया प्रयतितव्यम् । यदेव श्रद्धया क्रियते तदेव वीर्यवत्तरं भवति, यत्र निर्मलेन मनसा प्रवृत्तिः तत्र निर्दिष्टो मार्गः उपलभ्यते । अस्माभिरनुष्ठितं इदमेव देशप्रेम भगवता अनुमोद्यते पुरस्क्रियते च । जगदिदं एकं कुटुंबमिव प्रीणयतां तिलकमहाशयानां पावनं जीवनं तैराचरितश्च उज्वलदेशप्रेमा आदर्शनिदर्शनतया अद्यापि विराजते ।

परदेशेषु भारतदेशप्रेम्णः उदात्ततां मधुरतां संस्थापितवंतः श्री विवेकानंदा अपि विशेषतः अस्माकं श्रेयसे। "अन्यैः कलहे प्राप्ते वयं पंचोत्तरं शतं" इत्युक्तवतो धर्मराजस्य दिव्यावाणी व्यवहारनिरताय कस्मै सहृदयाय न रोचते। कस्य वा सौमनस्यं नोत्पादयेत्।

परस्परं द्वेषं मात्सर्यं च विसृज्य ऐकमत्येन संमिळनं कस्य मनसे न स्वदेत। एतादृशी प्रेममयी संघटना सर्वेषां शोभावहा आनन्ददायिनी च भवतु।

(बेंगळूरु आकाशवाण्यां ११—१०—५६ दिने प्रसारितं भाषणं तदधिकारिणां अनुमत्या अत्र प्रकाश्यते।)

## तुळसीदासजीवनम्

संवत् १५५४ श्रावणशुक्लपञ्चम्यां प्रयागक्षेत्रस्य समीपवर्तिनि राजपूर नाम्नि ग्रामे महात्मनः तुलसीदासस्य जन्म समभवत्। सः द्वादशमासान् मातुः गर्भ एव आसीत्। राम राम इति नाम जपन्नेव सः मातुः उदरात् पञ्चवर्षीयः बालक एव आविर्बभूव। तस्य मुग्धमुखमञ्जूषिकायां मुक्ताफलानीव मिषन्तः दन्ताः हन्त अत्याश्चर्यमेव आकलयन् जनानां। परमीदृशस्य बालकस्य मातृत्वं चिरं भोक्तुं योग्यं भाग्यं नैवासीत्तज्जनन्याः। एवं बाल्ये मात्रा धात्र्या च वियुक्तः अनाथः सः बालकः गृहाद् गृहमाहिण्डते स्म निराश्रितः। तदा काचनब्राह्मणस्त्री तस्य सुकुमारस्य कुमारस्य दुरवस्थां वीक्ष्य द्रुतहृदया अंतःकरणोद्रिक्तकरुणया तं बालकं स्वगृहं निनाय ररक्ष पुपोष तुतोष च।

तदा रामशैलोपरि नरहर्यानन्दनामा साधुः वसति स्म। सदाऽपि राम नाम उच्चरंतममुं बालकं वीक्ष्य आश्चर्यचकितः सः साधुः अमुं अयोध्यां निनाय। स एव च 'रामबोल्या' इति यथार्थ नाम्ना तं आजुहाव। ब्राह्मणबालकोऽयमिति तस्य उपनयनं विधाय तदनंतरं नरहरिस्वामी एव तस्य वैष्णवदीक्षां प्रदाय राममंत्रम् उपदिदेश। अयोध्यायामेव तुलसीदासस्य अध्ययनं प्रारब्धमभूत्। सूकरक्षेत्रे

(सोरो) नरहरितीर्थैः तुलसीदासाय रामायण-ग्रन्थस्य उपदेशः कृतः। ततः काशीं आगत्य तत्र पञ्चदशवर्षान् उषित्वा समग्रवेदवेदांगवेदांतशास्त्रादीनां सम्यगध्ययनं विहितं तुलसीदासेन ।

ततः कामपि कामकामिनीकमनीयां नितांतकांतकायकांति कन्यामणिं उदूह्य गार्हस्थ्यधर्ममङ्गीचकार तुलसी । रतिरूपरमणीयां रमणीमणिं तां आसाद्य पण्डितोऽपि तुळसीदासः प्रेयसीदासः सम्बभूव ।

मेघालोऽके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥

एकदा तस्य पत्नी पितृगृहं प्रति अगच्छत् । ततः कतिपयदिनानन्तरं तस्याः विरहवेदनां असहमानः तदधिष्ठितमेव ग्रामं प्रति प्रस्थितः । श्रावणमासः । धाराकारं संततं स्रवति स्म वृष्टिः। जस्वालितधूलीपङ्कपिच्छिला दुर्गमा एव आसन् राजपथा अपि। ईदृशेऽपि भीप्रसङ्गे कांतां दिदृक्षुः अधावत् श्वशुरगृहं प्रति। मध्ये एकस्या महानद्याः महापूरप्रवाहः कूलंकषः प्रवहति। तत्र च तीरे प्रवाहादागतः कश्चन शवः लोलुल्यते स्म । तं दृष्ट्वा 'अहो मम भार्या मम आगमनार्थमेव अत्र उडुपं स्थापितवतीति' मनसा तामभिवंद्य तमेव आरुह्य आयुःसूत्रस्य दृढीयस्त्वेन कथंचित् परं पारं आगतः। ततः श्वशुरगृहद्वारमागतः । रात्रिसमये दृढं पिहितं महाद्वारं विलोक्य कथमत्र अंतःप्रवेष्टव्यमिति विचारयत्येव तस्मिन् तत्प्रासादाग्रात् लम्बमानः कश्चन सर्पः भित्तिभागे तस्य दृग्गोचरो बभूव। 'अहो मम प्रेयसी नूनमतिकरुणाशालिनी एव। अत एव मम प्रासादाग्रारोहणाय रज्जुम् अत्र निक्षिप्तवती।' इति विचार्य तमेव गृहीत्वा आरुरोह, चंद्रशालायां च सधैर्यम् अवरुरोह, चंद्रमुखीं च स्वकांतां सन्ददर्श, सन्तुतोष च। तदा पत्युः तत्साहसं तच्च अमूल्यं प्रेम निरीक्ष्य तुलसीदासस्य पत्नी अवाक् अवाङ्मुखी च तस्थौ । 'हा नाथ किमहं ते ईदृशस्य अमूल्यस्य प्रेम्णः प्रतियच्छामि ।

योषावपुर्बहुपुरीषादिसर्वमलकोषायितं कलय भोः ।
भूषादुकूलसुमवेषादिभिर्बहुलतोषाय ते कथमहो ॥
"यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद् विण्मूत्रपूर्णं मम देहमीदृग् ॥"

  

# काव्यशास्त्रविनोदः

## (माघकाव्यसमीक्षा)

श्री के. राजन्नशास्त्री, धर्मपुरी

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।**
**नास्ति येषां यशःकाये जरामरणजं भयम् ॥**

अयि सहृदयाः !

विदितचरमेवेदं भवताम्– 'विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः' इति ।

तथाच निरुपमप्रतिभानवान् सकलशास्त्रपरिचयाविकल एव सत्कविर्महाकविव्यपदेश्यतामियादिति निर्विवादमेव । उक्तं हि कविकण्ठाभरणे क्षेमेन्द्रेण–

**" न हि परिचयहीनः केवले काव्यकष्टे कुकविरभिनिविष्टः स्पष्टशब्दप्रविष्टः । विबुधसदसि पृष्टः क्लिष्टधीर्वेत्ति वक्तुं नव इव नगरान्तर्गह्वरे कोऽप्यधृष्टः ॥**

तत्र तर्क-व्याकरण-भरत-चाणक्य–वात्स्यायन–भारत-रामायण–मोक्षोपायात्मज्ञान-धातुवाद-रत्नपरीक्षा-वैदिक-ज्यौतिष-धनुर्वेद–गजतुरगपुरुषलक्षण-द्यूतेन्द्रजालप्रकीर्णेषु परिचयः कविसाम्राज्याभिव्यञ्जनः" इति ।

स्ववैदुष्यप्रख्यापिका कविसाम्राज्याभिशंसिनी तादृशी तर्कादिपरिचितिः सर्वैरपि कविभिरवश्यामाशास्येतेत्र न संशयावकाशः । तथा प्रयतनीयं चाधुनातनकविवर्यैः । न हि 'नहि सर्वः

---

**इत्यादिभिः उपदेशपरैः वचनैः पार्थिवशरीरस्य असारतां विनिवेद्य श्रीरामचन्द्रमाराध्य जन्मसार्थकीकर्तुमादिदेश । तदा प्रेयस्याः अनेन परिणामकारिणा उपदेशप्रभावेन सहसा परिवर्तितं खिन्नं निर्वृतं निर्विण्णं च तस्य मनः । 'अद्य त्वमेव मम गुरुरि'त्युच्चार्य तामेव साष्टांगं प्रणनाम । ततः चिरं विरज्य सञ्जप्य प्रतप्य आराध्य च भगवन्तं तत्प्रसादप्रभावमहिम्ना तदपरोक्षज्ञानमेव अवापेति ।**

सर्वं जानाति । कश्चित् किञ्चिज्जानाति । कश्चित् किञ्चिज्जानाति । सर्वे मिलित्वा सर्वं जानन्ति ' इति महाभाष्यकारवचनस्य कथं वितथात्वं सम्पादयाम इति वक्तुं युक्तम् । तथात्वे कवितासर्वस्वभूतस्य वचनवैचित्र्यस्य दुर्लभत्वात् । दृश्यन्ते हि लोके नैककलाविदग्धाः । न च पल्लवग्राहिपांडित्यं भवतीत्याशङ्कनीयं । तस्य क्वचिदप्यनिष्णातविषयत्वात् । एकत्र निष्णातं ह्यन्यत्र परिचितिर्भूषयति, न तु दूषयति। आस्माकाः पूर्वेऽपि कविवतंसाः कालिदासादयः स्वग्रथितग्रन्थेषु स्वेषां सकलशास्त्रपरिचितिं प्रकटय्य स्वमहाकविशब्दमविकलार्थतामानिन्यिरे। इतरशास्त्रपरिचितिं स्वप्रबन्धेषु कीदृशं प्रकटितवन्त इत्येव सांप्रतं विचारयामः । उदाहरणपूर्वकमुदितमेव चेतश्चमत्कुरुते सर्वेषां। तस्मात्कवित्रये 'माघे संति त्रयो गुणा' इति वैशिष्टचं भजमानस्य माघस्यैव काव्यं दृष्टांततयोररीकुर्मः । कविपरिचयमन्तरा काव्यपरिचयस्यासमञ्जसतामवगच्छतापि काव्यामृतरसास्वादलोलुपानां कालविलम्बो माभूदिति विरम्यते । प्रसिद्धत्वाच्च माघचरितस्य भोजराजप्रबन्धादिषु ।

आदौ तावत् तर्कपरिचितिं पुरस्कृत्य किंचिद्वक्ष्यामः—

**अप्यनारभमाणस्य विभोरुत्पादिताः परैः ।**
**व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः ॥२–११॥**

इदं हि द्वितीयसर्गस्थं पद्यम् । इह हि सर्गे श्रीकृष्णबलरामोद्धवानामेककालापतितयोः सुरकार्यसुहृत्कार्ययोश्चैद्याभिगमनराजसूयाध्वरगमनयोः कतरत् प्रथमकर्तव्यतामर्हतीति विचारोऽभिवर्णितः । तन्मध्ये श्रीकृष्णं प्रत्युद्धववचनमिदम् । अस्यायमाशयः—

शक्तस्य स्वयमुदासीनस्यापि राज्ञः परोत्पादितान्यपि प्रयोजनानि स्वीयानि भवन्ति । यथा शङ्खभेर्यादिनिष्पन्ना अपि

  

शब्दा सर्वव्यापकस्याकाशस्य विशेषगुणतां भजन्ति। कविरत्र प्रस्तुतार्थोदाहरणमुखेन 'शब्दगुणकमाकाशम्' इति नैय्यायिककारिकां स्मारयन् 'विभो'रितिपदेनाकाशस्य विभुद्रव्यताञ्च द्योतयन् स्वन्यायशास्त्रज्ञतां व्यञ्जयति। अपि च पञ्चमसर्गे गजजलक्रीडावर्णनप्रस्तावेः– करिवारिपूरनिमज्जनोत्तरक्षणमेव तत्कपोलतो विनिर्गत्य विहायसि पुञ्जीभूतं भृङ्गगणमित्थमभिवर्णयति कविकुलललामः–

**द्रव्याश्रयेष्वपि गुणेषु रराज नीलो।**
**वर्णः पृथग्गत इवालिगणो गजस्य ॥५-३८॥**

अत्र गुणानां द्रव्याश्रयत्वमनिवार्यमित्य'पि' शब्देन द्योत्यते। तेषां द्रव्यसमवेतत्वात्। समवेतत्वञ्च समवायसंबन्धेन विद्यमानत्वम्। समवायश्च 'नित्यसम्बन्धः समवायः' इति लक्षणलक्षितः। तथा च द्रव्याणि परित्यज्य स्वतः स्थातुं कदाचिदपि श्वेततन्तुगतः श्वेतिमा तान् परित्यज्य पृथक् स्वतः स्थातुमलंभवेत् अत एव तयोर्नित्यसम्बन्धित्वम्। अत एवेयमुत्प्रेक्षा। अन्यथोपमैव स्यात्।

**अथ व्याकरणमधिकृत्य प्रस्तूयते :—**

ननु न ह्यज्ञातपाणिनीयेन केनापि नामेतादृशं दुर्बोधकाव्यं ग्रथितुं शक्येत। किञ्च 'मुषाण रत्नानि हरामरांगनाः' इत्यादिप्रयोगवैचित्र्यमेवास्य कवेर्व्याकरणवैदुष्यं ख्यापयतीति किं वा तदुपक्रमेणेति नो वाच्यम्। सर्वैरपि कविभिर्व्याकरणपारीणैरेव भवितव्यमिति नो नियमः। कविताकन्याया वरणे मुख्यं साहित्यनैपुण्यम् उक्तं हि कविकण्ठाभरणेः–

'**न तार्किकं केवलशाब्दिकं वा कुर्याद्गुरुं सूक्तिविकासविभ्रम।**' इति

अपि च प्रथितमेवेदम्:–

**नैव व्याकरणज्ञमेव पितरं न भ्रातरं तार्किकं......... ।**
**.........काव्यालङ्करणज्ञमेव कविता कन्या वृणीते स्वयम् ॥**

तस्मात् काव्यग्रथनमात्रतः पाणिनीयपारङ्गतत्वमस्तीति तु भ्रम एव। केवलशाब्दिकत्वस्य सूक्तिविकासविघ्नत्वात्। परं व्याकरणपरिचय आवश्यकः। शब्दसाधुत्वस्य तदधीनत्वात्। यदि काव्यालङ्करणविदुषो व्याकरणशास्त्रनिष्णातत्वं स हेम्नः परमामोदः। प्रकृते माघकवेर्व्याकरणशास्त्रनैपुण्यविषये न कियानपि वचनावकाशः। तथाप्यधुनास्य कवेरेषु शास्त्रेषु परिचयोऽस्तीति तत्पद्यान्युदाहृत्य निरूपयितुमिष्टत्वात् सहृदयानां 'चेतश्चमत्काराय भूयाच्चिर'मित्येवास्य मुख्याशयः। प्रकृतमनुसरामः।

चतुर्दशसर्गेऽर्घदानविचारे भीष्मस्तावत्— 'भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः' इत्यादिना भगवतः श्रीकृष्णस्यैवार्घयोग्यतां प्रतिपादयन् तं भक्त्युद्रेकात् स्तौति। तत्र चायं श्लोको दृश्यते—

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।**
**धातवः सृजति संहृशास्तयः स्तौतिरत्र विपरीतकारकः॥**

(शिशुपाल० १४।६६)

'अस्यैव भगवतः श्रीकृष्णस्य जगत्सृष्टिशासनसंहारकर्तृत्वम्। अनादिनिधनत्वाच्चास्य न कोऽपि स्रष्टा संहर्ता शास्ता च। अत एवायं स्तुत्यः स्तूयते च। न च कस्यापि स्तोता। सकललोकस्तुत्यत्वात्' इति वक्तव्ये कविर्भंग्यन्तरेण स्वव्याकरणवैदग्ध्यमभिव्यञ्जयन् कीदृग्वर्णितवान् सहृदया एव प्रमाणं। अहो! उक्तिचमत्कृतिः कविकुञ्जराणाम्।

अन्यच्च—

**परितः प्रमिताक्षरापि सर्वं विषयं व्याप्तवती गता प्रतिष्ठाम्।**
**न खलु प्रतिहन्यते कुतश्चित् परिभाषेव गरीयसी यदाज्ञा॥**

(शिशुपाल० १६।८०)

शिशुपालप्रहितस्य कस्यचिद् दूतस्य श्रीकृष्णस्य पुरतः शिशुपालवर्णनमिदम्। श्लोकार्थस्तु स्पष्ट एव। अत्रेदं मृग्यम्।

  

'सिचि वृद्धिः परस्मैपदेषु'।७-२-१।। 'परस्मैपदप्रत्ययपरके सिच्प्रत्यये परे धातोर्वृद्धिः स्यात्' इति सूत्रार्थः। अत्रेयं शङ्का जायते। 'परं धातुना किमन्तेन भाव्यमि'ति। तन्निरासार्थमेव 'इको गुणवृद्धी'।१-१-३।। इति परिभाषोपस्थितिः। अस्या अयमाशयः। गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इक' इति षष्ट्यन्तं पदमुपतिष्ठते। प्रकृते वृद्धिपदश्रुत्या 'इक' (इगन्तस्य) इति लभ्यते। दृश्यतां परिभाषाया निरंकुशा प्रवृत्तिः। अनयोर्द्वयोरपि सूत्रयोः भिन्नाध्याय स्थितिः सुस्पष्टैव। एवमेव परिभाषा सर्वत्रापि स्वविषयेऽप्रतिहततया प्रवर्तते। यथाऽऽह भगवान् भाष्यकारः– 'परिभाषा ह्येकदेशे स्थित्वा सर्वशास्त्रमभिज्वलयति दीपवत्' इति। अपरं च शिशुपालश्रीकृष्णसैन्ययोर्युद्धवर्णनप्रस्तावेः–

**निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम्।**
**पाणिनीयमिवालोकि धीरैस्तत्समराजिरम्॥**

(शिशुपाल० १९।७५)

निहतसुहृदादिकं तत्समरांगणं पाणिनीयशास्त्रसदृशं दृष्टमित्यर्थः। पाणिनीये हि सुहृदादिशब्दास्तैस्तैः सूत्रैर्निपातिताः। निपातनं नाम लक्षणाभावे शब्दसाधुत्वाय सूत्रकृतैव सिद्धरूपाणां सूत्ररूपेणोच्चारणम्। यथा 'शोभनं हृदयं यस्य' इति विग्रहेः– सुहृद्दुहृदौ मित्रामित्रयोः (५-४-१५) इति हृदयशब्दस्य हृद्भावो निपातितः। 'स्वं अस्यास्तीति' स्वामीति मत्वर्थीयो निपातितः। 'पितृभ्राता' पितृव्यः 'मातुर्भ्राता' मातुल इति व्यलुडन्तौ निपातितौ। भ्रातृशब्दस्तु औणादिक इति दृष्टव्यम्।

काव्यलोलुपाः! यदि कविरत्र 'तत्रत्यसैनिकानां सुहृदादयो बांधवाः सहस्रशो निहताः' इति वर्ण्ययेत तर्हि को वा विच्छित्तिविशेषो भवेत्। न कोऽपि। तस्मात् कवितायां विच्छित्ति-

 

विशेषोऽवश्यमभ्युपगन्तव्यः । अत एवालंकारिकैः सर्वैरपि चमत्कृतिजनकत्वमेवालंकारसामान्यलक्षणत्वेनाङ्गीकृतम् । केवलार्थशून्यपदग्रथनमात्रतः 'कवेः कविता' वा 'काव्यस्य वा काव्यत्वं' न भवितुमीष्टे । अत एव काव्यलक्षणं 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'ति पंडितराजजगन्नाथेन रसगंगाधरेऽभिहितम् । अपि च विच्छित्तिविशेषमादृत्यैव कविवर्यैरुक्त एवार्थो भंग्यन्तराश्रयणेन पुनःपुनरभिर्वाणतः । दृश्यतां नैषधीयचरिते नलमुखवर्णनप्रस्तावे 'स्वकेलिलेश' इति श्लोकद्वयम् । माघेऽपि तृतीयसर्गे 'प्रसाधितस्यास्य' (३-१२, १३) इति श्लोकद्वयेन श्रीकृष्णवर्णनम् । कविकंठाभरणेऽप्युक्तम् । 'न हि चमत्कार– विरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वं–

**एकेन केनचिदनर्घमणिप्रभेण काव्यं चमत्कृतिपदेन विना, सुवर्णम् ।**
**निर्दोषलेशमपि रोहति कस्य चित्ते, लावण्यहीनमिव यौवनमङ्गनायाः ॥**

इति । अत एव वचनचमत्कृतिः सम्पादनीया । तर्कादिसकलशास्त्रपरिचितिर्हि वचनचमत्कृतिं पुष्यन्ती कविताविषये सा काष्टा सा परा गतिः । कविताविषये द्विविधो यत्नः । दिव्यः पौरुषश्च । तत्र पौरुषः समस्यापूरणं महाकाव्यावलोकनं पण्डितगोष्टी इत्यादिर्विदित एव । दिव्यस्तु वाग्देव्युपासना । उपलक्षणमेतत् । यथाकथञ्चित् सुकृतं सम्पादनीयमिति परमार्थः । तादृशवाग्झर्या वचनचमत्कृतेश्च सुकृतादृते दुर्लभत्वात् । अस्मिन् हि काव्ये सर्वतोभद्रादिमहायमकं तत्तद्वर्णनचमत्कृतिं व्यङ्ग्यवैचित्र्यमालक्ष्य को वा कविर्विद्वान् वा वाग्देव्यस्य स्वाधीनेति न मनुते । अकृतसुकृतेन माघेन कोटिजन्मभिरपीदृश्यां कवितायां सिद्धिः प्राप्ता न भवेदिति मदाशयः । केवलं माघमभिक्ष्यैव न मयोच्यते । कवनधर्मणः सर्वेऽपीति । श्रूयते हि कालिदासो

  

महाकविः कालीप्रसादत एव कवितां लब्धवानिति । अपि च श्री हर्षेणापि 'तच्चिन्तामणिमन्त्रचिन्तनफले' चिन्तामणिमन्त्र-जपेनाहं कवितां लब्धवानिति सूचितम् । भारविरपि 'सुकृत-मन्तरा तादृश्या वाग्झर्याः न हि प्रवृत्ति'रित्याह । दृश्यताम् किरातार्जुनीये:—

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगंभीरपदा सरस्वती ॥ (१४-३) इति

तस्मात् सत्यपि पौरुषे प्रयत्ने दिव्यः प्रयत्न आवश्यक इति न विस्मरणीयम् । अलमेतावताऽधुना । भारतादिपरिचय-विषयकमन्यत् सर्वमग्रिमाङ्के निरूपयिष्यते ।

## नामरहस्यम्

(श्रीक्षितीशचन्द्र-चट्टोपाध्यायः)

शचीकुमारः शचीप्रसन्नः शचीराणीत्यादीनि नामानि सुप्रसिद्धानि वङ्गेषु । इन्द्रः शचीपतिरिति श्रूयते च वेदेषु । तत्र शचीशब्दस्य कोऽर्थ इति विचारे पुलोमजा शचींद्राणीत्यमरवचनं मानसमधिरोहति, ततश्च प्रतीयते देवराजस्य पत्न्या नाम शचीति । पाणिनीये धातुपाठे शच् व्यक्तायां वाचीति, शक्ल शक्ताविति च पठ्यते । निघण्टौ वाङ्-नामसु कर्मनामसु प्रज्ञानामसु च पठितः शचीशब्दः । वस्तुतस्तु शक्ल शक्तावित्यत एव शचीशब्दो निष्पन्नः । अस्य चार्थः—शक्तिः, सामर्थ्यं, बलमिति । इन्द्रो हि विशेषतो बलस्य देवता । तथाच यास्केनोक्तम्—या च का च बलकृतिरिंद्रकर्मैव तत् [ निरुक्त ७।१० ] इति । अत एव इन्द्रः शचीपतिरित्युपवर्ण्यते स्म । तस्य च पत्नींद्राणीति स्तूयते । क्रमेण जनानां मतिः सञ्जाता "इन्द्रः शचीपतिः" इत्यस्यार्थः—इन्द्रः शचीं नाम कुमारीमुपयेमे इति । ततःप्रभृति शचीशब्द इन्द्राण्या नामांतरमिति प्रथितं लोके ।

दिने दिने लब्धरुचिर्विवस्वान् मीनं च मेषं च वृषं च भुंक्ते ।
आशावलम्बोपचिता न कस्य तृष्णालतानर्थफलं प्रसूते ॥

# लावण्यम्

सहृदया,: कस्य वा लोचनयुगलं न विलोभयति लावण्यमिह जगति, कस्य वा न विदितं लावण्यस्य लक्षणम्—

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥

इति ? टीकाकृद्भिः प्रायेण लवणशब्दात् ष्यञा लावण्यशब्दो व्युत्पाद्यते । तत्तु सचेतसां चेतसां प्रीतये न भवति । कामं लवणमाहार्येषु स्वादुतां समर्पयति* कामं तत्र चाकचिक्यं वर्तते, तथापि लवणेन क्षारेण साकं लावण्यस्य सम्बन्धः समुद्वेगमिव जनयति सहृदयानां हृदयेषु ।

रामायणे [ अरण्य २५।५ ] दृश्यते—

वनरामण्यकं यत्र जलरामण्यकं तथा ।
सन्निकृष्टं च यत्र स्यात् समित्पुष्पकुशोदकम् ॥

इति । अत्र च्छन्दोऽनुरोधेन रामणीयकशब्देन रामण्यकरूपं स्वीकृतं भाति । रमणीयशब्दाच्च योपधाद् गुरूपोत्तमाद् वुञ् इति भावे वुञि रामणीयकशब्दस्य निष्पत्तिः । ततश्च रमणीयस्य भाव इति तस्यार्थ इति सिध्यति । लावण्यशब्दस्यापि स एवार्थः । प्रथमतस्तावद् रामणीयकं रामण्यकं सञ्जातम्, ततो रामण्यं ततो रलयोरभेद इति न्यायेन सन्निहितयोरनुनासिकयोरेकस्य विषमीकरणप्रक्रियया चाननुनासिकीकरणेन लावण्यमिति निष्पन्नमिति प्रतिभाति ।

* तथाच कथासरित्सागरे दृश्यते—

बभूव गह्वरग्रामवासी कोऽपि जडः पुमान् ।
स मित्रेण गृहं जातु नीतो नगरवासिना ।
भोजितो लवणस्वादून्यन्नानि व्यञ्जनानि च ॥
केनेयं स्वादुताऽन्नादेरित्यपृच्छत् स गह्वरः ।
प्राधान्याल्लवणेनेति तेनोचे सुहृदा तदा ॥
तदेव तर्हि भोक्तव्यमित्युक्त्वा लवणस्य सः ।
पिष्टस्य मुष्टिमादाय प्रक्षिप्याभक्षयन्मुखे ॥
तच्चूर्णं तस्य दुर्बुद्धेरोष्ठौ श्मश्रूणि चालिपत् ।
हसतस्तु जनस्यात्र मुखं धवलतां ययौ ॥

# कौतुकशब्दस्य निर्वचनम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

महर्षिणा पाणिनिना युवादिगणे (५।१।१३०) कुतुक-शब्दः पठितः । लोकेऽपि कुतुककौतुकशब्दौ सुप्रसिद्धावेव । अमर-कोषनिर्माणावसरे कुतुकशब्दोऽपि कौतुकसमानार्थः सञ्जातः । पूर्वं तु विशेषणमासीत् ।

गणरत्नमहोदधौ दृश्यते– कुतुकं कुतूहलम् । विवाहवाचीत्यन्ये इति । अमरटीकायां भानुजिता बहूनि निर्वचनानि समुल्लिखितानि । "कुतूं कायति । कै शब्दे । आतोऽनुप० इति कः । उपपदसमासः । इको ह्रस्वोऽङ्यः० (६।३।६१) इति ह्रस्वः । प्रज्ञाद्यण् (५।४।३८) वा । यद्वा कुत्वां भवम् । अध्यात्मादित्वात् (४।३।६०।१) ठञ् । इसुसुक्तांतात्० (७।३।५१) इति कः । केऽणः (७।४।१३) इति ह्रस्वः । संज्ञापूर्वकत्वात्पक्षे वृद्ध्यभावः । यत्तु तुज् हिंसायाम् । कं तुजति । मूलविभुज (३।३।५।२) इति कः । न्यङ्क्वादित्वात् (७।३।५३) कुत्वम् इति मुकुटेनोक्तं तन्न, कुत्वज् आंतरतम्या जस्य गत्वप्रसङ्गात्" इति ।

सर्वमेतदतिमात्रं क्लिष्टं । यः खलु शब्दो विस्पष्टमेव युवादिगणे पाणिनिना पठितस्तस्य तद्गणतोऽपसारणं गणांतरे च पठनं साहसमेव । अस्माकं मतेन सुतुकशब्दस्य प्रतिद्वंद्वभूतात् कुतुकशब्दाद् युवादित्वादणि कौतुकशब्दो निष्पन्नः । वेदे सुतुक-शब्दोऽन्तरातरोपलभ्यते । अग्निः सुतुकः सुतुकेभिरश्वैः (ऋ.सं. १०।३।६) इत्यृक्पादः प्रसिद्ध एव । आपश्चिदस्मै सुतुका अवेषन् (ऋ.सं. १।१७८।२) इत्यत्र स्त्रीलिंगः सुतुकाशब्दोऽपि श्रूयते । सुतुकाशब्दस्यार्थः शीघ्रगामी, सुतुकाशब्दस्य च शीघ्रं स्रवंतीति ।

प्राचीनतमेऽपि काले सुतुकशब्दोऽविस्पष्टार्थः संजातः, अत

 

एव निघंटौ नैगमकांडेऽस्य सन्निवेशः संदृश्यते। अत एवाम्नायगतः सुतुकः सुतुकेभिरिति सुतुकनः सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति वेति व्याख्यातं निरुक्ते।

एतत्प्रतिद्वंद्वितया च कुतुकशब्दोऽप्यासीदित्यनुमीयते। तस्य चार्थ आसीत्—मन्दगामीति। मन्दगामित्वं च कुतूहलेन*—रम्यवस्तुसमालोके लोलतया—भवति। अत एव कौतुकशब्दस्यार्थः सञ्जातः कुतूहलम्, यथा मन्दाक्षशब्दस्यार्थो व्रीडा। सुतुकशब्दो वेदेषूपलभ्यते, सौतुकशब्दस्तु सम्भूतिमेव न लेभे। कौतुकशब्द इदानीमपि संदृश्यते, मूलीभूतः कुतूहलवदर्थकः कुतुकशब्दो विलीन एव वैवस्वतनगरे।

---

# किंकथिका

[श्रीक्षितीशचन्द्र-चट्टोपाध्यायः]

किंकथिकाशब्दोऽयमतीव मनोहरः, अभिप्रेतार्थप्रकाशे च सुसमर्थः प्रायेणेदानीं नोपलभ्यते।

**यत् कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः।**
**तत् प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्॥** (मनु ४।१६१)

इति मनुवचनं व्याचक्षाणेन मेधातिथिनोक्तम्— यत्र कर्मणि क्रियमाणे किंकथिका न भवति, तत् कर्तव्यम्। यत्र तु हृदयं न तुष्यति तद्वर्जनीयम्। इति। अत्र किंकथिकाशब्देन शङ्का, संशयः, द्वैधम् (compunction, hesitation, scruple) प्रतीयते। किं च कथं च किंकथम्। तयोर्भावः किंकथिका। द्वन्द्वाद् वुन् वैरमैथुनिकयोः (४।४।१२५) इति योगविभागादवैरमैथुनिकेऽपि वुन्। अव्ययानां भमात्रे टिलोप इति टेर्लोपः। एवं कथोपकथनिकाशब्दोऽपि संवादार्थेऽन्तरान्तरोपलभ्यते।

---

* आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन् वल्लभान्
सङ्गीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन् क्षणम्।
सद्यो विस्मृतसिंहलेशविभवः कक्षाप्रदेशेऽप्यहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाऽहं कृतः॥ रत्नावली ४।१२

# कविराजस्मरणम्

पुण्यपत्तनस्थे दक्षिणमहाविद्यालये (डेक्कन कॉलेज) ऐषमः १४–११–५६ दिने निर्वर्तिते कालिदासमहोत्सवप्रसङ्गे सभायां पठिताः श्लोकाः ।

( कार्तिकसुद्येकादश्याम् )

सदयमुदयकूटप्रोद्गते पद्मबन्धौ
जगदिदमपनिद्रं स्फूर्तिमाप्नोति यद्वत् ।
कविजनहृदि तद्वन्नाम यस्य प्रमोदं
जनयति कविसम्राड् भात्यसौ कालिदासः ॥१॥

वल्मीकसम्भवपराशरसूनुसेवां
कृत्वा पुरा कमलसम्भवधर्मपत्नी ।
भावानुरूपपदनर्तनचातुरीं स्वां
वाणी स्वयं विनिदधे कविकालिदासे ॥२॥

सारस्वतोरुविपिनोदरकीर्णशब्द–
रत्नान्यहो मृगयतां कविमार्गभाजाम् ।
मार्गं प्रदर्शयति दीपशिखेव यस्य
काव्यत्रयी स्मरत तं कविकालिदासम् ॥३॥

सन्दर्भरिक्तपदयोजितकाव्यपाशा–
स्तिष्ठन्त्वमी कुकवयो रसविप्रकृष्टाः ।
काव्यत्रयीं दिशति नः कविकल्पवल्लीं
शब्दप्रसूनमकरन्ददकालिदासः ॥४॥

सद्रत्नभूषणनवाम्बरभूषिताङ्गा–
स्तृप्यन्ति रूपमवलोक्य हि दर्पणेषु ।
तद्वच्च यत्कृतिततौ मुकुरायितायां
क्रीडन्ति काव्यवनिताः स हि कालिदासः ॥५॥

सुरपतिमिव मेघे सर्वदा सञ्चरन्तं
पशुपतिमिव काले सृष्टवन्तं कुमारम् ।
चरमवयसि भक्त्या वाचमप्यर्थयुक्तां
कविजनहृदयानां कल्पवृक्षं स्मरामि ॥६॥

—कृष्णमूर्तिशास्त्री, संस्कृताङ्गलकोशप्रकाशनसंस्था

# वेंकटाध्वरेः वाङ्मुखम्

दाक्षिणात्यकविषु 'विश्वगुणादर्श' चम्पूकारः श्री वेंकटाध्वरिः अतीव सुप्रसिद्धः। तस्य 'लक्ष्मीसहस्रं' नाम एकं श्लोकपूर्णं एकान्तमनोज्ञनैकश्लोकं अतिसरसं काव्यं वर्तते। तस्य काव्यस्य प्रारम्भे कविना स्वाहंकारखण्डनाय स्वपूर्वकविगौरवाय च प्रास्ताविकमेकं वाङ्मुखं विरचितं दृश्यते।

कालिदासोऽपि रघुवंशमहाकाव्यस्य प्रारम्भे नैकोपमाद्यलङ्कारमुखेन स्वसौजन्यं विनयं तथा प्राचीनकविषु च स्वस्य गौरवबुद्धिं च प्रकटयति। तानि च 'मन्दः कवियशः प्रार्थी, 'क्व सूर्यप्रभवो वंशः, 'अथवा कृतवाग्द्वारे, 'रघूणामन्वयं वक्ष्ये, 'तं सन्तः श्रोतुमर्हन्ति' इत्यादिपद्यानि महाकवेः निरहङ्कारतालङ्कारां सौजन्यसुन्दरां विनयबन्धुरां च कामपि कमनीयां कालिदासस्य मूर्तिं वाचकानां चक्षुषोः पुरतः उपस्थापयन्ति। तथा कवेः भाषासौंदर्यस्य वाग्वैखर्याः उपमाकौशल्यस्य निरूपणभङ्गीहृदयङ्गमतायाश्च नित्यसाक्षीणि भवन्ति। एवं च कस्यापि काव्यस्य नाटकस्य वा वाङ्मुखमेव तत्कवयितुः प्रतिभायाः कवित्वशक्तेश्च मापनज्ञापनसाधनं भवति। तथा तदीयगुणावगुणदर्शनदर्पणमपि भवतीति विदितमेव विदुषां परिशीलितनैकसंस्कृतप्रबन्धानाम्।

तदत्रापि लक्ष्मीसहस्रकाव्यस्य वाङमुखदर्पणे महाकवेः वेंकटाध्वरेः कीदृशं व्यक्तित्वं प्रतिबिम्बितं वर्तते इत्येतदत्र परीक्षयामः।

कालिदासवदयमपि स्वाहङ्कारशङ्काशंकूटङ्कनाय नैकानेव सालङ्कार-शब्दझङ्कारमनोहरान् श्लोकान् निर्मिमीते। न क्वचिदपि भवभूतिवत् जगन्नाथवद्वा केवलमात्मप्रशंसां वा प्राचीनकविनिन्दां वा करोति। कालिदासादपि सातिशयमस्य सौजन्यं इति

प्रतीयते । यतो हि कालिदासः–

**अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥**

इति पद्ये वाल्मीक्यादिमहाकवीन् नामोल्लेखपुरस्सरं नैव नमति । परमयं तु प्राचीनकविषु बद्धश्रद्धः प्रबुद्धकविः कृतज्ञताबुद्धया 'नमो वाचे प्राचेतसाननजन्मने' इति नामग्रहणपूर्वकमेव व्यास-वाल्मीक्यादीन् प्रणम्य स्वमतदेशिकमपि 'श्रीमान् वेंकटनाथ-देशिकमणिः श्रेयांसि भूयांसि मे' इति प्रार्थयते । अस्यैव वेंकटकवेः 'पादुकासहस्र' नामकप्रबन्धस्य प्रणालीमनुसृत्यैव लक्ष्मीसहस्रमपि प्रणीतमिति प्रतिभाति । वस्तुतस्तु रसभाव-शब्दालङ्कारमाधुर्यादिदृष्ट्या विचार्यमाणे पादुकासहस्रापेक्षया लक्ष्मीसहस्रं रसरम्यतया सविशेषं रञ्जयति रसिकचेतांसि । परं तथापि वेंकटाध्वरेः स्व पूर्वाचार्यस्य वेंकटकवेः विषये निरति-शयैव श्रद्धा आसीत् । तथा सहस्रपद्यात्मककाव्यप्रणयने वेदांतेदेशि-काचार्यसदृशामेव महाविदुषां योग्यता न मादृशामिति स्पष्ट-माचष्टे यथा–

**पद्यानां दशभिर्यदस्तुत शतैः त्रय्यन्तविद्यागुरुः**
**श्रीमान् वेंकटनाथदेशिकमणिस्तत्राम्ब को विस्मयः ।**
**स्तोकप्रज्ञमतीव मूढमपि मां श्लोकैः सहस्रेण ते**
**स्तोतारं समवेक्ष्य सूक्ष्ममतिभिः कस्मान्न विस्मीयते ॥**

कालिदासः 'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यतां' इति स्वस्य उपहासविषयत्वे मन्दतां सामान्यतः कारणतया निर्दिशति न तत्र उक्तिवैचित्र्यं चमत्करोति सचेतसां चेतः । परं तमेव अर्थं वेंकटाध्वरिः कीदृश्या वाचोवैखर्या चारुचातुर्या च निरूप्य चित्तभित्तौ विच्छित्तिवैचित्र्यमुच्चेतयति पश्यन्तु सहृदयाः–

"चक्षुष्मन्तः चरण[1]कमले चक्षुषा श्रोत्र[2]वन्तः ।
श्रोत्रे[3] भूमेर्जलधितनये जन्मवन्तोऽपि न स्मः ॥
वक्त्राण्यासन् भगवति! न षट्[4] पञ्च[5] चत्वारि[6] वा नः ।
कस्मादस्मान्न हसतु जनस्तोष्यतस्तद्गुणौघम् ? ॥"

नूनमिमां वक्रोक्तिमालोक्य कस्य वा सहृदयस्य आस्ये हास्यं लास्यं नैव विधास्यति ?

किं च कालिदासः–

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः'

इत्युक्त्वा ईदृशसूर्यवंशवर्णनव्यापारो नाम उडुपेन समुद्रतरणमेवेति आह–

'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ।' इत्यनेन

परं अत्र कवीश्वरस्यापि कालिदासस्य उक्तौ चमत्कारच्छटा न किञ्चिदपि चञ्चति । परं ईदृश एव अर्थः दाक्षिणात्यकवेः काव्यकादम्बिन्यां कीदृशीं वा सौदामिनीयां सुषुमामयासीदित्येत् तत्साक्षात्कुर्वन्तु प्रेक्षावन्तः अत्र–

"वक्तुं नैव चतुर्विधश्रुतिरसावीष्टे न चाष्टश्रुतिः
नो चक्षुःश्रुतिरप्यहो तव गुणान्नारायणप्रेयसि ! ॥
स्तोतुं त्वामपि तामहं व्यवसितो दूरं हनूमन्मुखैः
दुर्लंघ्यं जलधिं तरीतुमनसः पङ्गोर्दधे चापलम् ॥"

अत्र काव्यजीवातुभूतः चमत्कारः प्रतिचरणं चंचलाचाकचक्येन चारु चंचति, समुदंचयति च सामोदरोमांचकंचुकं कलेवरेषु ।

पण्डितराजः जगन्नाथः–

"मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा
कदाचित् केषांचिन्न खलु विदधीरन्नापि मुदम् ॥
परन्ते जीवन्तोऽप्यहह मृतका मन्दमतयो
न येषामानन्दं जनयति जगन्नाथभणितिः ॥"

1 अक्षपादः, 2 आदिशेषः, 3 भूश्रोत्र नाम वल्मीकं तद्भवः वाल्मीकिः
4 षण्मुखः, 5 पञ्चमुखीपरमेश्वरः, 6 चतुर्मुखः

  

अत्र पण्डितपते: पद्यप्रणयनप्रणाली शैली 'मधुद्राक्षावा साक्षादमृतं वेति' वक्तुं शक्यते। तावता 'तत्र आनन्दं न विन्दन् मन्द: जीवन्नपि मृत:' इति स्वयं कवे: स्पष्टोक्ति: न पुष्टीकरोति कवे: विषये विशिष्टां गौरवबुद्धिम्। परं तमेवार्थं समुचितदृष्टान्तमुखेन संवर्ण्य समेषामपि सहृदयानां आदरभाजनतामुपगच्छति वेंकटाध्वरि: यथावा–

**"विद्वद्भि: स्वदमानयाऽत्मकृतया विश्वांब! नाधीयते**
**स्तुत्या ते सुखमज्ञचेतसि इषत्प्राये न दूये तत:।**
**गान्धर्वी हि पुरन्दरादिशिरसामान्दोलयित्री चिराद्**
**गीति: सा बधिरान् न नन्दयति चेत् किंच्छिन्नमेतावता॥**

अत्र जगन्नाथवेंकटाध्वर्यो: स्वभावे एतदेव एतावदेव च अन्तरम्। यत् पूर्व: जगन्नाथ: स्वप्रबन्धेषु आनन्दं अननुविदत:, मूर्धानं च अनान्दोलयत: जनान् मन्दमतीनिति विनिन्द्यापि अतृप्यन् 'मृतानिति जीवन्मृतानिति वा नरपशूनिति' वा सन्तर्ज्य फूत्करोति, क्रुध्यति, वाग्बाणैश्च तान् विध्यति। परं वेंकटाध्वरिस्तु मन्दमतीनां अनादरेण न किंचिदपि विमनायते न वा कुप्यति नाप्यन्तस्तप्यति नापि च तान् शपति। प्रत्युत तेषामुपरि अनुकम्पया एवं समाधत्ते–

**"तव स्तोत्रे मन्दा: कतिचिदतिचित्रेऽपि कमले!**
**न विंदन्त्यानन्दं यदि तदपि न म्लायति मन:।**
**सृजेदेव स्रष्टा स किल विपुलेऽस्मिन् क्षितितले**
**चमत्कारानंदानुभवचतुरान् छिद्रचतुरान्॥"** इति।

कालिदास: 'सोऽहमाजन्मशुद्धानामि'त्यादिना वर्ण्यविषयस्य महतीं असाधरणतां लोकोत्तरतां च प्रशस्य एवंगुणविशेषणविशिष्टानामपि रघुराजानां वंशचारित्र्यं 'रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्। तद्गुणै: कर्णमागत्य चापलाय प्रचोदित:' इत्यादिना प्रपंचयितुं प्रतिजानीते। परमत्र रघुराजानां उत्कृष्टत्व-

निर्वचने वा स्वस्य वाचिकदारिद्र्यनिरुक्तौ वा कोऽपि शाब्दिकः चमत्कारः आर्थिकं वैचित्र्यं वा भाविको विच्छित्तिविशेषो वा नैव गोचरीभवति महाकविफणितिषु । किं च 'तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः' इति भावशून्यमेव अभिहितं आदर्शकविना । परं कीदृशं तच्चापलं कथं वा महावंशविवक्षा 'चापल' शब्दाभिव्यंग्यत्वं सहते इत्यादिषु कविर्वाचंयम एव ।

परं वेंकटाध्वरिः तादृशं च स्वस्य चापल्यं अतिमनोहरतयैव कल्पनाविलासशालिन्या वाण्या सरसं निरूपयति, महालक्ष्म्याश्च परमैश्वर्यं द्योतयति कीर्तयति चैवं ।

**"शय्या शब्दगणानुशासनचणा छन्दोमयं वाहनम्**
**सोदर्यस्तु कलानिधिस्तव रमे सूनुस्तु वाणीपतिः ।**
**तस्यास्ते पुरतः स्तवं मितमतिः प्रोज्जृम्भितं श्रावयन्**
**गुञ्जाविक्रयिणः श्रयामि पदवीं माणिक्यपुञ्जापणे ॥"**

कालिदासेन 'चापलाय प्रचोदित' इति सामान्यतः निर्दिष्टमेव 'चापलं' रसक्षीरोदप्रक्षोभणदक्षस्य अस्य दाक्षिणात्यकवेः वाचि कियन्मधुरभावार्थरसरम्यं अभिव्यञ्जनमासादयति विमृशन्तु रसिकाः ।

अतः अत्र एतत्काव्यकरणं न लक्ष्म्याः आनन्दनाय किन्तु स्वार्थसाधनायेवेत्याह कवींदुः । अस्मिन्नपि पद्ये कल्पनानावीन्यं सुरभीकरोति समग्रमेव शब्दपुञ्जम् । तद्यथा—

**"गर्वदुर्दुर्वसुधापतिस्तुतिपरव्याहारकूपांधता—**
**निर्विण्णाशय एष वेंकटकविः पङ्केरुहावासिनि ।**
**अद्य त्वद्गुणवर्णनामृतरसैरानन्दितुं जृम्भते**
**चिञ्चापर्णरसावसन्नरसनः पुण्ड्रेक्षुसारैरिव ॥"**

सत्सु अपि सहस्राधिकेषु संस्कृतकविषु न कोऽपि ईदृशदृष्टान्तैः नित्यमुपयुज्यमानपदार्थानुभवमुखांतरमेव रुचिवैचित्र्यमुत्पादयति।

अत्रास्य महाकवेः सात्विकाहंकारोऽपि सौजन्यालंकारेण

विलक्षणभावझंकारेण च प्रमोदतरङ्गानेव उत्तरङ्गयति सहृदयहृदयान्तरङ्गेषु । दृश्यतां इयमत्र महाकवेः मदमाधुरी—

प्रकृष्यन्तामस्मत्परमितरकाले विधिमुखाः
वयं मातस्ते वा तव नुतिदशायां समधियः ।
निकर्षोत्कर्षौ स्तां निशि तु शशिखद्योतमहसोः
दिवा को वा भेदो दिनकरकरव्रातजटिले ॥

अत्र हि भार्गवीभक्तिभूमिकायां ब्रह्मादिदेवानपि स्वसमानकक्षापन्नतया उपस्थाप्य 'देवाधिदेवानां मम च को वा भेदः ?' इत्याक्षिपति । अत्र ब्रह्मसादृश्यं आत्मनः साभिमानं प्रथयतोऽपि महाकवेः पदबन्धेषु दुरहंकारदुर्गन्धः महदांध्यं वा नाभिलक्ष्यते । 'जानन्तु ते किमपि तान्प्रति नैष यत्नः' 'किमस्या नामस्यादलसपुरुषानादरभरैः' इत्यादिपूर्वकविपदपुञ्जेष्विव अत्र न कस्यापि धिक्कारध्वनिः श्रूयते । ईदृशः रसाहंकारः आनन्दांकुरमेव उत्पादयति रसिकचेतस्सु ।

एवमेव येन केन प्रकारेण देवभावं आत्मनि आपिपादयिषोः रसोत्कर्षं भावनोन्मेषं च संसिसाधयिषोः अस्य कविकुलकलाधरस्य अन्यान्यपि हृद्यानि द्वित्रपद्यानि आस्वाद्यन्ताम्—

वाग्भिः कोरकितानि ते रचयतः स्तोत्राणि वाणीपतेः
अस्माकं सुमितां स्तुतिं कलयतां ःम्ब ! तुल्यं फलम् ।
कौबेरीं श्रियमानशे बहुतरैः कश्चित्तपोभिश्चिराद्
एनामाशु कुचेल एव जगृहे धानाप्रदानादपि ॥

आसन् धन्यतमा गुणांस्तव बहूनासाद्य शक्रादयो
गृण्हन्तोऽपि गुणार्णवामृतकणान् मातः कृतार्था वयम् ।
आचामन्ति सुधाझरान् सुमनसो द्वित्रांश्चकोराः कणान्
एणांकादविशेषमार्तिशमनं तत्रोभयेषामपि ॥

एतत्काव्यप्रणयनावसरे कवेः भक्तिः परिपक्वदशामुपास्पृशदिति अनुमीयते । विश्वगुणादर्शचम्प्वादिषु इतरप्रबन्धेषु

 

नदनदीदेशपट्टणादीनां वृथावर्णनां कारं कारं उद्विग्नः निर्वेदमापन्नश्च भूत्वा इदानीं आत्मोद्धाराय वाचो विशुद्धतासिद्धये च लक्ष्मीसहस्रं प्रणिणीषति । तथा वृथा अन्यथा च वाग्वैभवं व्ययीकुर्वतो जनान् आत्मनः आरभ्यैव प्रथमतो विनिन्द्य इदानीं स्ववाग्व्यापारस्य शुद्धमुद्देशं स्निग्धहृदा मुग्धपद्धत्यां एवमाविष्करोति । संविद्यतां विदग्धैः–

तत्तादृग्रचनाविदग्धरसनाकण्डूतिनिर्धूतये
केचिन्नीचविचारगोचरगिरो ग्रथ्नन्तु मिथ्याकृतीः ।
स्वं वाग्ब्रह्म पुराणजिह्मगशिरःकम्पावहं पावनी–
कर्तुं देवि वयं पुनस्तवकथारम्भाय जृम्भामहे ॥

शीतज्योतिः-शिखरि-नगरी-सागराम्भोधरादेः
जल्पं जल्पं जलधितनये! हन्त मिथ्यासमृद्धिम् ।
निर्विण्णा मे ननु भगवती भारतीयं त्वदीयं
स्तोत्रं चित्रं स्फुरति जननि स्वैरमारब्धुकामा ॥

ईदृशनिर्वेदोत्पत्तेः प्राग् राजद्वारे महदेव अवमानादिकं अनुभूतमिति प्रतिभाति । यतः राजशब्दोच्चारणादपि अयं नितरां जुगुप्सते । राजप्रीतिकारककार्याणि च दूरादेव नमस्करोति । केनापि च राज्ञा अस्य महाकवेः मुखभङ्गो वा महात्रासो वा समाकलितः स्यात् । यतः यत्र यत्र अवसरः तत्र तत्र तन्निर्भर्त्सकविशेषणपदपुरस्कारेणैव राजादिशब्दान् सः निक्षिपति । पश्यन्त्वत्र राजरोषं वेंकटाध्वरेः–

दूराजावसथाभिधान-निरयद्वाराग्रजाग्रन्नर–
क्रूरालापविचारपेशलगिरो दूरान्नमस्कुर्महे ।
पारावारसुते! तरङ्गय मयि स्मेराम्बुजस्पर्धिनीः
घोरापारसमस्तदुष्कृतपरीहाराय धीरा दृशः ॥

मदान्धक्षोणीपत्यपसदमनःप्रीणनकृते
नमस्कारं ब्रूमो भगवति ...

  

विधात्रीमानन्दं विपुलमिह चामुत्र च तव
स्तुतिं प्रस्तौत्वंहोभरनिरसनायाद्य रसना ॥

अत्र रोषावेशवशात् फूत्कुर्वतोऽपि अस्य कविकोकिलस्य काव्यकुञ्जे नृत्यतीव सानन्दं सदानन्दसुन्दरी श्रीमती सरस्वती। अस्य महाकाव्यस्य प्रतिस्तवकं स्फुटीभवत् शब्दलास्यं भावविलासं कल्पनाकौशलं च साक्षात्कृतवतो मर्मज्ञस्य एवमेव निर्णयः भवति यदस्य प्रार्थनां प्रथमस्तवके कृतां नूनं कर्णे कृतवती एव भगवती लक्ष्मीः इति। प्रथममेवं प्रार्थयते स्वकाव्यनायिकां कविनायकः—

"देवि! श्रीवृषशैलदेवदयिते! दाक्षिण्यपण्यक्षिते!
मातः साहसतस्तव स्तवमिमं कर्तुं प्रवृत्तस्य मे।
उन्मीलन्तु परं गिरस्तवकरालङ्कारपंकेरुहात्
प्रेंखत्तुङ्गषडंघ्रिसंघविसरज्झंकारशंकाकृतः॥"

का वा भावान्विता देवाङ्गना ईदृशीं मधुरतरां प्रार्थनां भक्तस्य नैव सफलयेत्। तत्रापि कलाधरसोदरी पुंडरीकषण्डनिवासव्यसनिनी च रसिकराज्ञी श्रीदेवी तु वेंकटाध्वरेः काव्[illegible]नयीं भक्तियुक्तां च याचनां प्रार्थनां श्रुत्वा प्रीत[illegible]न्ना च भूत्वा तत्प्रार्थनापद्यानुसारमेव वरं प्रादादिति भ[illegible]। यतोऽत्र पुरस्तात् समग्र एव काव्ये तस्य प्रार्थनानुगु[illegible] 'सुचारुमधुवीचिकारसमुचो वचो देवता—। कुचामृतकचाकचिप्रचुरचातुरीमेदुराः।' एव मधुरोदारा गिरः स्वयमुन्मीलन्ति। एतासां च धृतमधुसुधाझरीमाधुरीधुरां वेंकटाध्वरिगिरां रस्यं स्वारस्यं प्रशस्यं च भावार्थरहस्यं अवश्यमचिरादेव मधुरवाण्यां प्रकाशयिष्यामः।

अम्ब त्वद्गुणलेशपेलमिदं डिम्भस्य मे जल्पितं
साकं लोकपतिस्त्वया निशमयन् नाकं विधातुः पदम्।
मोक्षं चाननुरूपमेव फणयन् मोदान्महोदारधीः
मन्ये सम्प्रति पारितोषिकमसावन्वेषयन्मे हरिः॥

Regd. No. B 7171



# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणकपोस्टटिकीटप्रेषणं कार्यम् ।

व्हीं. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डरद्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः प्रकाशयेरन् । अ· मुख·· क्षराः नीरसाः दीर्घतराकाराः कठिणतर·श्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्यमयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

BOOK-POST

To,

Sree

If addressee is not found please retern to sender.

पंढरीनाथाचार्य गळगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग (कर्नाटक)

Printed at the Hombali Printery, Gadag by H. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

पर्यायपीठाधीशश्रीविबुधेशतीर्थस्वामिपादानां कृपापोषिता



# मधुरवाणी



उडुपी श्रीकृष्णमठद्वारा संचालिता ।



नित्योद्यत्कलहोत्सुके ननु रमासत्यादिसत्यष्टके ।
अस्तः शैशवमेव मे वरमिति त्यक्त्वा गृहस्थाश्रमम् ॥
स्त्री-तत्सङ्गि-नृणामपीह न करस्पर्शोऽपि मे स्यादिति ।
यत्येकार्च्यमनोज्ञशैशववपुर्धारी स शौरिर्मुदे ॥

सम्पादकः प्रकाशकश्च
पं. पण्ढरीनाथाचार्यः गलगली
वार्षिकमूल्यम् (५) रूप्यपञ्चकम्
१९५६ डिशंबर (मार्गशीर्ष) मासस्य सञ्चिका गदग

## —▯ विषयानुक्रमः ▯—



सूचना—[illegible] लेख्या ।

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया चिरावज्ञ मूर्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

२० वर्ष ] श्री दुर्मुखि सं. मार्गशीर्षसञ्चिका [ नवमोऽङ्कः

## मङ्गलाचरणम्

लीलालाङ्गलवेल्लितोर्ध्वचलितैरब्धेरशेषैर्जलै- ।
र्यो मायाञ्चविभ्रङ्गोऽम्बरतले सिन्धुं विधायांतिके ॥
नाथो नेति नितान्तदूनतनयां मंदाकिनीं नंदयन्
जामात्रा ननु मेलनेन स महामीनोऽनवीनोऽवतु ॥१॥

लीलां नीलपयोधरां विषहृदं पङ्कं सदा बिभ्रतीम् ।
कालिंदीं कुभुजङ्गसङ्गकलुषां नीचैर्गतां श्यामलाम् ॥
नाकाङ्क्षेऽहमितीरितश्रवणतः क्रुद्धां समाधित्सया ।
तन्नाम्नीं दयितां नदीपरतया व्याख्यद् गिरं स्वां हरिः ॥२॥

## मासावतरणिका

कृत्वाभ्यञ्जनमुष्णवारि च कदुष्णान्नं सुतप्तं पयः ।
जग्ध्वा, कम्बलमूर्णवस्त्रनिचयं धृत्वा च कांतास्तनम् ॥
श्रीमन्तोऽत्र निशांतरेऽहनि दृढाबद्धे निशांते सुखम् ।
हेमन्ते विहरन्ति किन्तु विधना हा हन्त सीदन्त्यहो ॥१॥

वस्त्रं वासगृहं समं स्फुटशतच्छिद्रं च जीर्णं तथा ।
दूरे शीतनिवारणं न कुरुते गुह्याङ्गसंगोपनम् ॥
वातोऽयं यमदूतवद् गृहभरं वात्याशुगत्वं भजन् ।
[illegible] निजतनुं कूर्माङ्गसङ्कोचितम् ॥२॥

 

# साधुषु असाधुः सर्वकारः

**"यदा वेदेषु शास्त्रेषु गोषु विप्रेषु साधुषु ।**
**धर्मे मयि च विद्वेषः स वै आशु विनश्यति ॥"**

इति भागवते आशुविनाशस्य कारणीभूतायां साधनसामग्र्यां साधुजनविद्वेषः प्रधानतया परिगणितः । हिरण्यकशिपु-वेन-दुर्योधनप्रभृतयः दुष्टराजमहाराजाः साधुद्वेषादेव विनाशमुपगताः । पुण्यशीलः अस्माकं भारतसर्वकारोऽपि तादृशीमेव वेनशकुनिशीलितां सरणिमनुसरति । पूज्यान् पीडयितुमुपक्रमते । वन्दनीयान् बंदीगृहे आबन्धुं सानन्दमुद्युंक्ते । सन्यासिनामुपरि अन्याय्याचरणं स्वस्य अनन्यसामान्यं कर्तव्यमेवेति मन्यते । राजहंसान् राजकीयनियन्त्रणपञ्जरेषु शृङ्खलासन्दानितान् कर्तुं उत्सुकते च अहो खिलता खलता उच्छृङ्खलता च अधिकारिणाम् ।

१९५६ जुलै २७ दिनाङ्के भारतीयलोकसभायां साधुसन्यासिनियन्त्रणविधिः एकः उपस्थापितः शासनसंस्थया । तस्य अभिप्रायः 'भरतखंडे ये ये साधवः सन्यासिनो वा योगिनो विरागिनो वा तै तैः सर्वैरपि तत्तन्मंडलाधीश्वरस्य समीपमुपगत्य स्व-स्व-साधुत्वविषये प्रमाणपत्राणि प्रदर्श्य साधुतासम्पादनाय जिल्लाधीशस्य संमतिः संपादनीया इति । नो चेत् तेषां सश्रमकाराग्रहदंडशिक्षादिकं स्यात् ।

नूनमिदमतीव लांछनास्पदं लज्जाकरं च । सर्वसङ्गं परित्यज्य लौकिकव्यापारेभ्यः ये विरिरिंसन्ति तथाविधानां साधुसत्पुरुषाणां जिलाधीशकार्यालयं प्रत्यानयनं, तत्र तेषां प्रमाणीकरणं, साधुत्वासाधुत्वविमर्शनमित्यादिकं च महत्यवेयं विडंबना। भारतवर्तिसर्वमंडलाधीशापेक्षया सकलान् राजहंसान् योगीश्वरान् पीठाधिपतीन् यतिराजांश्च निकृष्टान् अप्रामाणिकान् मनुते सर्वकारः ? वस्तुतस्तु साधुकनुरूपाणां योग्यतां परीक्षितुं साधु-

श्रेष्ठा एव अर्हा अधिकारिणः। वरिष्ठाधिकारिणां आर्जवेन दाक्षिण्येन च उच्चाधिकारि स्थानानि लब्ध्वा उत्कोचग्रहण-धूम्रपान-चौर्य-सुरापान-द्यूत-व्यभिचारादिनैकदोषकवलितानां अधिकारमदान्धानां मंडलाधीश्वराणां पुरतः परीक्ष्यत्वेन व्रति-यति तति-पतीनामानयनमेव अप्रशस्तं अन्याय्यं अवमानकरं च।

अत्र सर्वकारः कारणं कथयति यत् 'केचन साधवः पर-प्रतारणं अन्यायाचरणं कुर्वंति। अतः सर्वेषां नियंत्रणं आवश्यकम्'। सत्यम्! यद्येवं तर्हि सर्वकारेऽपि केचन (केचनेति कुतः) उत्कोचग्रहण-सुरापान-सार्वजनिकद्रव्यगिळङ्करणादिपञ्चमहापातककर्तारः विद्यंते एव। ततः तत्र सर्वेषामपि अधिकारिणां कांग्रेसजनानां च नियन्त्रणविधिः कुतो वा नोत्तार्यते। अधिकारिणः यावतो यादृशो वा अपराधान् अन्यायकार्याणि घोरकृत्यानि वा आकलयन्ति तच्छतांशमपि सर्वेऽपि साधवः मिलित्वापि नैव कर्तुं पारयन्ति वराकाः।

हन्ताद्य कम्युनिष्ठ-द्रविडकळगं-सत्यशोधकसमाज-मुस्लीमलीगप्रभृतिसंस्थाः तत्सदस्याश्च यादृशं देशद्रोहं कुर्वंति तथाविधं राष्ट्रविघातक-राज्यविध्वंसक-व्यापारं वनेचराः भिक्षान्नजीविनः साधवः जन्मांतरेऽपि कर्तुं किं शक्नुयुः? न कस्यापि देशद्रोहिणः समाजघातकस्य वा उपरि अद्य निर्बंधः। किंतु सर्वात्मना निरुपद्रविणां 'राम राम, कृष्ण कृष्णेति' क्वापि उपविश्य भजन-पूजन-पारायणादिकारिणां साधूनामुपरि यमयन्त्रणमित्यहो बलीयस्त्वं कलिकालस्य।

आनुवंशिकहिंसारतीणां क्रौर्य-चौर्यैकजीविनां (Criminal Tribes) वनेचरकुटुंबीयानामुपरि देशक्षेमार्थं विद्यमानाः सर्वेऽपि नियमनिर्बंधाः स्वयं सर्वकारेणैव शिथिलीकृताः। त एव इदानीं चौर्यचातुर्येण गुप्तसुराव्यापारेण च स्वच्छंद समाजे संमानेन संचरंति। परं व्रतोपवासादिभिः शरीरं काष्ठीकृत्य यावज्जीवं धर्म-

मुपदिशन्तः, नीतिं बोधयन्तः संतः निर्बध्यन्ते बध्यन्ते रुध्यन्ते वध्यन्ते विद्ध्यंते चेत्यहो विवेकभ्रष्टता सर्वकारीयशासनसंस्थासदस्यानाम् ।

किंचायं निर्बंधः केवलं हिंदूनामेवोपरि विद्यमान इत्यालक्ष्यते । मुसलमान-क्रिश्चन-जैन-बौद्धादिमतीयाः सर्वेऽपि साधवः साधीयांसः गरीयांसः योग्याः श्लाघ्या एव वर्तंते इति कथं निःश्चिनोति सर्वकारः । हिंदुषु परं सर्वेऽपि साधवः नष्टाः भ्रष्टाः जारा चोराः घोराश्चेति कथं निर्णीतम् । सर्वात्मना तुच्छम् इदं सापत्न्यमात्सर्यं हिंदुषु सर्वकारस्य । वस्तुतो विचार्यमाणे निःस्वार्थबुद्धया परोपकारं कुर्वाणाः साधवः वंदनीया एव न बंदीगृहेषु बंधनीया न वा निर्बंधनीयाः । साधुभिः जगति विद्याप्रचारः संस्कृतिप्रसारः धर्मजागृतिः नीतिप्रकाशनं च सम्भवति । ईदृशाः साधवः सर्वात्मना सहायदानेन रक्षणीया एव नतु पुनः शिक्षणीयाः ।

तथाविधानां भारतीयसंस्कृति-संस्कृत-सनातनधर्म-सम्प्रदाय-रीतिनीति-तत्वज्ञान-तितिक्षा-औदार्य-सौहार्दादिनैकगुणगण-संजीवनैकजीवातुभूतानां साधुसत्पुरुषाणां नियन्त्रणकारकं इदम् अनुशासनं धार्मिकजनानामेकं आव्हानमिव वर्तते । तदत्र सभा-सम्मेलन-लेखन-भाषणादिद्वारा तमेतं सर्वकारीयं प्रस्तावं निषिध्य पत्र-तन्त्रीसंदेशादयः सहस्रशः दिल्लीं प्रति प्रेषणीयाः । तेन सर्वकारस्य दृगुन्मीलनं स्यात् । तदत्र विषये श्री श्री द्वारकापीठाधीशाः श्रीशङ्कराचार्यमहाराजाः सर्वतोमुखप्रयत्नपरकाष्ठामेव आकलयन्त आसते । तदत्र कर्मणि तेभ्यो महद्भ्यः सर्वेऽपि पीठाधिपतयः साधवः सन्यासिनः सहकारं कृत्वा सहायं दत्वा सहानुभूतिं प्रदर्शयन्तु इति प्रार्थयामहे । भगवान् खण्डेन्दुशेखरः खण्डपरशुः तेषामखण्डप्रयत्नस्य श्रेयः फलं यशश्च प्रददात्विति सभक्त्युन्मेषं नाथामहे नमेन गौरीनाथम् । इति शम् ।

# काव्यशास्त्रविनोदः

'पाण्डित्यहीनाः कवयो भवन्ति' इति वचनं न यथार्थं। यतो श्रीहर्ष–विद्यारण्य–अप्पय्यदीक्षित–जगन्नाथपण्डितप्रभृतयः कवयः तथा पण्डिता अपि आसन्। नहि पांडित्यं कवित्वप्रतिपन्थि। नापि कवित्वं वा पांडित्यप्रतिरोधि। श्रूयतामियं जयदेवकवेः प्रौढोक्तिः–

येषां कोमलकाव्यकौशलकलालीलावती भारती।
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते॥
यैः कांताकुचमण्डले कररुहाः सानन्दमारोपिताः।
तैः किं मत्तकरींद्रकुम्भशिखरे नारोपणीयाः शराः॥

वस्तुतस्तु "द्वित्रकोशपरिज्ञानं द्वित्रव्याकरणज्ञता। द्वित्रशास्त्रविमर्शश्च कारणं काव्यसम्पदः॥" इति काव्यसम्पत्तौ रसनिष्पत्तौ च शास्त्रपरिज्ञानस्य कारणतां आमनन्ति अभियुक्ताः। यद्यपि शास्त्रपांडित्यं विनापि सरसकाव्यप्रणयनं कर्तुं शक्यते। ये ये कवयः ते ते सर्वे चतुःशास्त्रपंडिता एव वर्तन्ते इति नैव सार्वत्रिको नियमः। अपण्डितैः ग्रथितेष्वपि प्रबन्धेषु रसस्फुरणस्य भूयसा दृष्टचरत्वात्। परं यत्र पांडित्यकवित्वयोः सामानाधिकरण्यं वर्तते तत्र लोकोत्तरकमनीयतमकाव्यसृष्टिः सम्भवेत्।

आदत्ते हि तयोः प्रयोग उभयोः आमोदभूमोदयम।
सङ्गः कस्य हि न स्वदेत मनसे माध्वीकमृद्वीकयोः॥

उपलभ्यन्ते भूयांस्येव ईदृशानि महाकाव्यानि यत्र कवयितृणां न केवलं कवित्वम् अभिद्योत्यते किन्तु अन्यादृशी शास्त्रवैदुषी अपि अभिव्यज्यते। माघ-नैषधीयचरितादिषु च परःशतान्येव पद्यानि समुपलभ्यन्ते यैः तत्प्रणेतृणां बहुशास्त्रपरिचयः उन्नीयते। भूयस्सु च स्फुटपद्येषु सुभाषितश्लोकेष्वपि शास्त्रीयविधिविधानादीन्युपयुज्य चमत्कारः संपादितः दरीदृश्यते। विशे-

षतश्च वैयाकरणकविभिः वैयाकरणानुशासनानि उपजीव्य विहिताः प्रभूता वाग्विनोदाः विचित्रतममेव विच्छित्तिविशेषमुपजनयन्ति ।

'श्वयुवमघोनामतद्धिते' इति सूत्रं ग्रथ्नन्तं मुनित्रयमध्यममण्डनमणिं व्याकरणाचार्यं भगवन्तं पाणिनिमपि विडम्बयति कश्चन काव्यकण्ठीरवः । अहो निरंकुशता साहित्यसंसारस्य–

'काचं मणिं काञ्चनमेकसूत्रे मुग्धा निबध्नन्ति किमत्र चित्रम् ।
विचारवान् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह ॥'

अन्यश्च कश्चन धन्यतमः कविमान्यः पाणिन्युक्तं अत्युचितमेवेति मन्यमानः अन्यादृशैव चातुर्या एवमुपन्यस्यति तमेवार्थं–

युवा हि नित्यं मघवाऽमरत्वात् शुना च तुल्यं चरितं चचार ।
अतो मुनिः पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह ॥

अत्रासौ स्वेच्छाकविः यदृच्छासूत्रितेष्वपि शब्देषु किमपि सुसांगत्यं सन्दर्भणौचित्यं च स्फोरयति । वस्तुतस्तु केवलं शब्दस्वरूपस्वभावनिरूपणैकदृष्टेः पाणिनेः कल्पनायामपि अनवतीर्णान् विषयान्निरूप्य विविच्य च चमत्कुरुतेऽसौ चेतांसि हृद्यैः पद्यैः।

भोजप्रबन्धे च पाणिनीयव्याकरणगतानि 'सर्वस्य द्वे (८-१-१) 'वृद्धो यूना' (१-८-८५) 'एको गोत्रे' (४-५-९३) स्त्रीपुंवच्च (१-२-८६) इति भिन्नभिन्नप्रकरणगतानि चत्वारि सूत्राणि कस्यचित् ब्रह्मराक्षसस्य प्रश्नरूपत्वेन उपस्थाप्य कालिदासेन समञ्जसं उत्तारितम्–

"सर्वस्य द्वे जगति नियते सम्पदापच्च जन्तोः
वृद्धो यूना सह परिचयात् त्यज्यते कामिनीभिः ।
एको गोत्रे भवति पुरुषः सम्पदामाश्रयो यः
स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥"

समस्यात्वेन परिगृहीता पाणिनेः चतुःसूत्री अत्र अतीव सुमनोहरयैव पद्धत्या आपूरिता नितरां प्रीणयतितरां पंडितपरिषदम्।

एवमेव प्रौढमनोरमानाम्नि सुप्रसिद्धे वैयाकरणग्रन्थेऽपि—

"उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ
गतवति विलयं च प्राकृतेऽपि प्रपञ्चे ।
सपदिपद मुदीतं केवलः प्रत्ययो यत्
तदियदिति मिर्मीते को हृदा पण्डितोऽपि ॥"

अत्रत्यः व्याकरणवेदांतविनोदः मोदयति सुधियः मोहयति च उभयशास्त्राऽव्युत्पन्नात् आवेदयति च ग्रन्थकर्तुः वैयाकरणभूषणस्यापि अद्वैतवासनावेशम् ।

### कातन्त्रव्याकरणस्य उत्पत्तिकथा

पूर्वं शातवाहनो नाम राजा आसीत् । सः एकदा स्वस्य अतीव पण्डितया कांतया सह जलक्रीडार्थं सरोवरम् अगच्छत् । तत्र च जलकेलिमध्ये खिन्ना राजमहिषी राजानं 'मोदकं देहि राजन्' इत्युवाच । तदा राजा 'राज्ञी मोदकं समपेक्षत' इति मत्वा परिचारकैः मोदकानि आनाययामास । प्रादाच्च प्रेम्णा पयःप्रवाहे परिप्लवंत्यै प्रेयस्यै । तदा राज्ञी 'किमेतद्! कुत इदं मोदकप्रदानमधुना जलकेलौ? इति अपृच्छत् । तदा राजा 'त्वयैव मोदकं देहीति मोदकापेक्षा कृता । तदर्थमानीतानि मोदकानि । तदिमानि स्वीकुरु' इति अवदत् । तदा राज्ञी 'धिक् पुंसामज्ञानम् 'मा उदकं देहि' इति मया उक्तम् । जलक्रीडासमये मोदकमपेक्षितुं नाहं मूर्खा न वा अरसिका' इति सोपहासं समन्दहासं च अब्रवीत् । तत् श्रुत्वा स्वस्य व्याकरणाज्ञानं च ज्ञात्वा खिन्नः विषण्णः लज्जितः अवमानितः आत्मन्येव च जुगुप्सितश्च महाराजः व्याकरणं अध्येतुं प्रारभत । तस्य महाराजस्य कृते तस्य राजास्थानविद्वान् शर्ववर्मनामा पण्डितः अतीव सुलभतमं संक्षिप्तं व्यवहारोपयुक्तं च व्याकरणं विलिख्य तं राजानं सम्यगध्यापयामास । तदेव च व्याकरणमद्यापि कौमारव्याकरणं कातन्त्रव्याकरणं कालापव्याकरणं चेति सुप्रसिद्धं वर्तते ।

## वरपरीक्षा

पूर्वकाले क्षत्रियकन्याः वरस्य शक्तिपरीक्षां कृत्वा वृणते स्म । परं ब्राह्मणकन्यास्तु वरस्य ज्ञानाकारं परीक्ष्यैव विवाह-संमतिं यच्छन्ति स्मेति केषांचन मतम् ।

पूर्वं कदाचित् काचन विद्यावती कन्यामणिः स्वं वरीतुम् आगतं वरं 'विहस्य विहाय अहं कथं' इति शब्दचतुष्टयस्य परिचयं प्रदातुं प्रार्थितवती । तदा सः भूतलबृहस्पतिः निःशङ्कं तत्क्षण एव "विहशब्दस्य अकारांतपुल्लिङ्ग ष.वि. एकवचनं विहस्य इति, तस्यैव च च. ए. व. रूपं विहायेति भवति । तथा अह इति अकारांतशब्दस्य द्वि.ए. रूपं अहम्, तथा कथशब्दस्य द्वि.ए. रूपं कथम् इति भवति इत्यकथयत् । तदा सा चतुरकन्यका मंदं हसन्ती प्राह–

**"यस्य षष्ठी च चतुर्थी च 'विहस्य' च 'विहाय' च ।**
**'अहं' 'कथ' द्वितीया स्यात् द्वितीया स्यामहं कथम् ॥"**

यस्य हि भूतलबृहस्पतेः 'अहं 'कथं' इति अव्ययौ अपि अकारांत-द्वितीया वि.ए. रूपे भवतः तस्य अहं कथं द्वितीया अर्थात् पत्नी भवेयम् इत्यपृच्छत् ।

कश्चन पिता दुश्चारिणीं पुत्रीं दृष्ट्वा लोकापवादांश्च श्रुत्वा खिन्नः रुदन्नासीत् । तदा पंडिता सा पुंश्चली पुत्री पितुः समीपमुपगत्य समादधाति दुष् धातु दृष्टांतमुखेन–

**"तात वाभट ! मा रोदीः कर्मणां गतिरीदृशी ।**
**'दुष' धातोरिवास्माकं दोषसम्पत्तये गुणाः ॥"**

दुष् धातोः गुणोऽपि यथा दोष एव सम्पद्यते तथा ममापि गुणः दोष एव भवति । किं करवाणीति ।

एवमेव सामासिकैः चमत्कारैः चमत्कुर्वन्ति अपि भूयांस्येव पद्यानि सुभाषितसाहित्ये उपलभ्यन्ते । स्थलसंकोचादत्र द्वित्राण्येव उदाह्रियन्ते–

"द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुषकर्मधारय येनाहं स्यां बहुव्रीहिः ॥"
"अहं च त्वं च राजेन्द्र लोकनाथौ उभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ॥"

'विप्रतिषेधे परं कार्यम्' इति (१-४-२) पाणिनीय सूत्रस्य साधीयानेव उपयोगः श्रीकृष्णप्रेयस्या राधया समुचितयैव रीत्या विहित इत्याह कश्चन कविः—

"निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि ! ।
शृणु सखि पाणिनिवचनं 'विप्रतिषेधे परं कार्यम्' ॥"

### वैदिकवाग्वादविनोदः

संस्कृते पंचाङ्कपर्यंतानां संख्यावाचकशब्दानां एक द्वित्र्यादीनां त्रिषु लिंगेष्वपि भिन्नभिन्नान्येव रूपाणि भवन्ति । पंचादिशब्दानां तु त्रिषु लिंगेषु एकविधमेव रूपं भवति । एतद् वैचित्र्यमेव व्याकरणज्ञस्य देवेंद्रस्य असुरविजये शस्त्रामासेति शतपथब्राह्मणे काचन कथा आयाति तद्यथा— "देवाश्च असुराश्चोभये प्राजापत्याः पस्पृधिरे । ते दण्डैर्धनुभिः न व्यजयन्त । ते हाऽविजयमाना ऊचुः । हन्त वाचैव विजिगीषामहै । स इन्द्रो अब्रवीद् "एको मम" इति । 'अस्माकमेका' इति इतरे अब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं एकश्चैका च इति । 'पञ्च-मम' इति इन्द्रोऽब्रवीत् । तदितरे मिथुनं नाविन्दन् । नो ह्यत ऊर्ध्वं मिथुनं भवति । ततोऽसुराः सर्वे पराजयन्त । सर्वस्मात् देवा असुरान् अजयन् ।



# कः अत्र अपराधी ?

पूर्वकाले अतीव न्यायपक्षपाती कश्चन राजा आसीत् । सः प्रतिदिनं धर्मासनं अधिष्ठाय निष्पक्षपातबुद्धया न्यायनिर्णयं करोति स्म । तेन सः लोके न्यायनिष्ठुरः धर्मनिष्ठुरश्च चक्रवर्ती इति प्रसिद्धः अभवत् ।

एकदा सः 'विक्रमसिंहासनम्' इति प्रसिद्धं स्वस्य धर्मासनम् आरुह्य न्यायनिरीक्षणं करोति स्म । तदा रक्षिणः कमपि वेदवेदान्तपारङ्गतं एकं ब्राह्मणं शृङ्खलाभिः बध्वा आनयन् । न्यायासनस्य पुरस्ताद् उपस्थापितं वेदविशारदं शास्त्रपारङ्गतं च तं ब्राह्मणं दृष्ट्वा राजा आश्चर्यचकितः अभवत् । 'राजः कोशात् द्वे सुवर्णनाण्ये ह्यः अपहृते' इति रक्षिणः तस्य अपराधं निवेदितवन्तः । ब्राह्मणेनापि सः अपराधः एकपदे एव अंगीकृतः।

राज्ञः मनसि आश्चर्यस्थाने चिंता प्रवेशं अकरोत् । अनेन च ब्राह्मणेन यद्यपि अपराधः कृतः, तथा अङ्गीकृतश्च । परन्तु 'मया ईदृशाय पंडितोत्तमाय शिक्षा कथं वा प्रदेया' इति सः चिंतामग्नः बभूव । ईदृशाः साक्षात् शारदायाः अपरावताराय-माणाः भूमण्डलबृहस्पतयः विद्वांसः यदि शिक्ष्यन्ते शास्यन्ते दंड्यन्ते खंड्यन्ते च तदा सोऽपि मम महानपराध एव भवेत् । यदि सः विना शासनं मुच्यते तदा मम न्यायनिष्ठा नीतिदीक्षा निष्पक्षन्यायनिष्ठुरता च निरर्थकैव स्यात् । 'धर्मराज' इति मम कीर्तिः अपि नाशम् एष्यति । अतः अत्र किं वा कार्यम् ? इति किंकर्तव्यताविमूढः दिङमूढश्च संवृत्तः सः राजा ।

तदा राजा स्वस्य राजगुरुं आहूय धर्मनिर्णयं तम् अपृच्छत् । तदा निस्पृहशिखामणिः विरक्तवरेण्यः सः धर्माचार्यः नर्भयं निर्मायं च राजानं उद्दिश्य स्पष्टं आह "राजन् अत्र

त्वमेव दण्डार्हः शिक्षायोग्यश्च" इति। तस्य धर्मगुरोः एतत् शासनं श्रुत्वा समग्रमेव तद् आस्थानमण्डपं मूकविस्मितं भयभ्रांतमिव च अतिष्ठत्। तदा पुनः सः धर्मगुरुः स्निग्धगम्भीरेण धीरध्वनिना सर्वेषामपि आस्थानमण्डपगतानां जनानां मुखमण्डलेषु उन्निद्रां प्रश्नार्थकमुद्रां उत्तरयन् प्रोवाच–

'राजन्! अत्र मम कः अपराधः' इति त्वं अधुना पृष्टुं इच्छसि। एतासां तव प्रजानां भ्रूभङ्गोऽपि तथैव मां परिपृच्छति। परं अत्र त्वमेव अपराधी। कथं चेत् शृणु। 'ईदृशः सर्वशास्त्र-पारंगतः अपि ब्राह्मणः भोक्तुं अन्नं अलभमानः उदरपूर्तये चौर्ये प्रवृत्तः। यस्मिन् राज्ये अथवा यस्य शासने महामहापण्डिता अपि अशनवसनपर्याप्तं धनं न विन्दन्ति, अत एव तेषां बुभुक्षा-सङ्कटात् चौर्यं क्रौर्यमपि च आलम्बनीयं भवति अगत्या, धिक् तं राजानं धिक् तस्य शासनम्। सत्यमीदृशाः परम्परया शारदा-संहारकारणीभूताः राजानः न्यायदृष्ट्या दण्डनीयाः शिक्षणीया एवेति मम मतम्' इति।

## कविरत्नं ज्ञानसुन्दरी

**नर्तकी कवयित्री च।**

दक्षिणकाशीति सुप्रसिद्धे कुम्भकोणक्षेत्रे श्रीवत्सगोत्रोत्पन्नाः कुप्पुस्वामिनामानः पण्डिताः आसन्। तेषां एका ज्ञानसुन्दरीति अन्वर्थकेन नाम्ना सुप्रथिता शिष्या आसीत्। सा च साहित्ये सङ्गीते नृत्ये कवित्वे च असाधारणं पांडित्यं प्रावीण्यं प्रसिद्धिं च प्राप। सा च कुरंगीनयना कोमलांगी हृदयंगमसंगीतभंगीमंगीकृत्य भगवतो रङ्गनाथस्य मङ्गलमयनामानि संगायन्ती तरङ्गयति स्म आनन्दोर्मीः सहृदयान्तरङ्गेषु। विविधभावभङ्गीमनो-

रमैः अङ्गाभिनयैः क्वचित्तुरङ्गीव क्वचिद् भुजङ्गीव क्वचिद् कुरङ्गीव क्वचित् पतङ्गीव च नृत्यन्ती मत्तमातङ्गीव नृत्तवृत्तानुसारिपदप्रक्षेपणैः प्रमोदयति स्म प्रेक्षकवृन्दम् । भ्रमद्भृङ्गीव शिंजानमञ्जीरमञ्जुमणितसंवादिनृत्यगीतैः रंजयति स्म रसिकपुंजम् । क्वचिच्च ललितपदबन्धमनोरमैः भावबन्धुरैः अर्थसुन्दरैः स्वयंकृतैः काव्यप्रबन्धैः आनन्दयति स्म आन्दोलयति स्म च विद्वद्वृन्दवृन्दारकाणामपि मनांसि शिरांसि च । अद्यापि दक्षिणभारते केचन वर्षिष्ठाः विद्वांसः अस्याः ज्ञानसुन्दर्याः स्वयमवलोकितां नृत्यचातुरीं कण्ठमाधुरीं वाग्वैखरीं च सरसमुपवर्णयन्तो दृश्यन्ते ।

अचिरादेव गानसरस्वत्याः कविकोकिलायाः नृत्यविद्यापट्व्याश्च अस्याः कीर्तिः दिगन्तविश्रान्ता समभवत् । ज्ञानपक्षपाती च महीशूरमहाराजः तामेनां सबहुमानमाकार्य तस्याः वाग्वैभवं आशुकवित्वं च दृष्ट्वा नितरां प्रीतः सुतरां प्रसन्नश्च सम्बभूव । तथा नैकपण्डितप्रेष्ठभूयिष्ठे स्वस्य आस्थाने तस्याः आस्थानविदुषीस्थानं प्रदाय 'कविरत्न' इति पदव्या, प्रशस्तिपत्रेण, क्षौमवासःप्रदानादिबहुमानेन च तां सभाजयामास । प्रायः मैसूरराज्ये 'आस्थान' विद्वत्स्थानं मानं आसादितवती स्त्री नाम इयमेव प्रथमा इयमेव च चरमा चेति ज्ञायते ।

एवं तदा मधुरापट्टणे सुप्रसिद्धः आर् फिशरनामकः कश्चन पाश्चात्यप्राड्विवाकः आसीत् । सः अस्या ज्ञानसुन्दर्याः कवित्वं दृष्ट्वा प्रसन्नो भूत्वा तस्यै उदाराश्रयं प्रायच्छत् । तस्याः कृतिरत्नानां प्रकाशनभारमपि उवाह । भूयांसि च देवतास्तोत्राण्यपि तया विरचितान्यासन् । तत्र 'वल्लभगणपतिभुजंगाष्टकम्' 'वैमनस्यनिष्कासनाष्टकम्' इत्यादीनिसुप्रसिद्धानि वर्तन्ते ।

तस्याः अतीव सुप्रसिध्दा कृतिर्नाम 'हालास्य चम्पूः'। अयं च सरसः चम्पूप्रबन्धः कुम्भकोणस्य श्रीविद्यामुद्रणालये मुद्रितः। तत्र मधुरापुरीश्वर्याः मीनाक्ष्याः तथा श्री सुन्दरेशस्य च विवाह महोत्सवः अतीव सरसया हृदयङ्गमया च भङ्ग्या निरूपितः। षट्स्तबकात्मकोऽयं चंपूप्रबन्धः ज्ञानसुंदर्याः प्रतिभाप्रकर्षस्य कवित्वकौशल्यस्य, वाग्जाल्लभ्यस्य अनन्यलभ्यस्य कल्पनाविलासस्य वैदुष्यस्य च अपूर्वमेकं निदर्शनं भवति। आस्वाद्यतामस्याः एतत्पद्यद्वयस्य हृद्यता।

**"मधुरीकृतगरलत्वात् मधुराभिख्या तदादि सा नगरी**
**निजसीमस्थफणित्वाद् विभाति हालास्यनामतश्चेह।**
**तस्या ललाटलीनस्वाहापतिरेव शान्तसन्तापः**
**रेजे कुङ्कुमतिलकव्याजान्नूनं बुधा हि कालविदः॥**

---

# जीवनाधारः

ले. **महात्मा गान्धी,** नवजीवन ट्रस्ट सौजन्यादनूदितम्

अहं युष्मभ्यं एकं अनुभवपरिशोधितं मन्त्रम् उपदिशामि। प्रतिदिनं प्रातः सूर्योदयात् तथा रात्रौ च शयनात् पूर्वं सः मन्त्रः सर्वैरपि भक्तिपुरस्सरं अवश्यं पठनीय एव। सः मंत्रो नाम 'श्रीराम जय राम जय जय राम' अथवा 'रघुपति राघव राजाराम पतितपावन सीताराम' इत्यादिकः। आनुपूर्वी तु यादृशतादृशी वा अस्तु। रामेति वर्णद्वयं यत्र वर्तते स एव तारकमन्त्रः।

कोटयधिकानां च हिन्दूनां भावना एवं वर्तते यत् परमेश्वरो नाम, अथवा देवोत्तमः परमात्मा नाम साक्षाद् राम एव इति। सत्येयं तेषां भावना शुध्दा चेयं बुध्दिः। यस्य कस्यापि पुरुषस्य स्त्रियो वा भूत-भीति-बाधा यदि भवेत् रामनाम स्मरणेन सा सद्यः समूलं नश्यति इत्येतद् मम बाल्य एव सुवि-

# भारतीयकथानां

## विश्वविजयः

" एतद्देशप्रसूतस्य सकाशादग्रजन्मनः
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः "

इतीयं मनुजकुलमूलभूतस्य महामुनेःमनोः उक्तिः बहूनामेव आधुनिकानां गर्वोक्तिरिति अत्युक्तिरिति वा प्रतिभासते। परं अस्माकं तु इयं न अतिशयोक्तिः किन्तु अल्पोक्तिः इति एव भाति । यतः पृथिव्यां सर्वमानवा भारताद् न केवलं चरित्रं अशिक्षन्त किन्तु चरित्रं अचोरयन्तापि। चरित्राणि चारित्रिकग्रन्थांश्च चोरयित्वा स्वदेशं नीत्वा शताधिकवर्षानन्तरं मूलग्रन्थकर्तुः नामापि अनिर्दिश्य स्वकपोलकल्पितमिव स्वमेधःप्रसूतमिव नव्यं दिव्यं च चारित्रिकग्रन्थ जातं कथासाहित्यं च निर्मान्ति। परमिदानीं 'चोरः एव चोरपदानिपरिचेतुं चतुरः' इति न्याया-

---

दितमासीत्। बाल्ये मम मित्रपरिवारेषु बहव एव जनाः संकटसमयेषु रामनामजपेन शान्ति स्वास्थ्यं च अविन्दन् इत्येतत्तु अनेकवारं मम प्रत्यक्षगोचरं अभवत्। शिक्षणेन अधिकाधिकज्ञानसंपादनेन च अस्माकं जीवनं यद्यपि विकसितं भवति। परं सङ्कटसमयेषु अथवा समुंग्धावस्थासु च तद् ज्ञानं निरुपयुक्तमेव। प्रभूतेनापि तेन ज्ञानेन चित्तं स्वास्थं समाधानं वा नैव लभते। एवं दिङ्मूढभावं उपगते मनसि, महामहाघातपातैः जर्जरिते च आत्मनि सुश्रध्दया विहितं रामभजनं संजीविनीव नवचैतन्यमेव प्रददाति। यदायदा मम चित्तं येनकेनापि वा कारणेन उद्विग्नं च प्रक्षुब्धं च भवति तदा अहं रामनामैव भक्त्या स्मरामि। तेनैव च जगति: 'शान्तिः शान्तिः शान्तिः' तुष्टिः पुष्टिश्च भवति।

नुसारेण तेषां च चोराणां चौर्यचातुर्यं तद्वंशीयाः परिचित्य जगति प्रख्यापयन्ति । अस्माकं च तं मुष्टं पदार्थं दृष्टवापि तत्र आत्मीयतास्मृतिः नोदेति । तैरेव उक्तेषु अपि वचनेषु महापरिश्रमपूर्वकं संशोध्य परिशोध्य च निर्णीतेष्वपि विषयेषु नास्माकं प्रामाण्यबुध्दिः । धिगस्माकं नैच्यानुसन्धानम् !

अस्माकं भारतदेशे रामायणमहाभारतग्रंथौ यथा आकारेण बृहत्तरौ अर्थगौरवेण च महत्तरौ तथा समग्रपाश्चात्यदेशेषु 'ईलियड्' 'ऑडिसी' नामानौ ग्रन्थौ अतीव प्रसिध्दौ पूज्यौ प्रशस्यौ प्रकृष्टौ महाप्रमाणौ च । जागतिकवाङ्मये एव ईदृशानि ग्रंथरत्नानि क्वचिदपि नैव विद्यंते, पुरस्तादपि च नैव संप्रतिपत्स्यंते चेति मुक्तकंठं तैर्जोघुष्यते । परं अस्मिन् विषये लंडनस्थित ऑक्सफर्ड विश्वविद्यालयप्राध्यापकेन संशोधकाचार्येण डॉ.ग्रिफित्थमहोदयेन महापरिश्रमपूर्वकपरिशोधनानन्तरं किमुच्यते परिशीलयन्तु विवेकिनः "ईलियड् अथवा ऑडिसी एते उभे अपि पाश्चात्यप्रपञ्चस्यैव पूजनीये महाकाव्ये न मौलिके नदा स्वतन्त्रकृती । किन्तु भारतदेशीय रामायणमहाभारतग्रन्थयोरेव नाम परिवर्त्य नवीननाम्ना तयोरेव कथासंग्रहः कृतः पाश्चात्य भाषया । एतद्ग्रन्थकर्तुः नाम 'होमर' इति वर्तते । तस्य अर्थस्तु संकलनकर्ता इत्येव" ।

क्रैस्तधर्मगुरोः एसूक्रिस्तस्य तथा यहूदीधर्मप्रवर्तकस्य 'हुजरत् मुसा' नाम्नश्च जन्मकथा कृष्णजन्मकथां अवलंब्यैव कल्पिता इति प्रतीयते । कंससमानधर्मिणः हेरोदनाम्नः राज्ञः पट्टणे 'एशू' जन्म अभवत् । तदा 'हे हेरोद तव मृत्युरूपः बालकः जनिष्यति तवैव पट्टणे" इति आकाशवाणी भवति । तां च श्रुत्वा हेरोदः भयभ्रान्तः भूत्वा सर्वानपि नवजातान् शिशून् संहर्तुं यमदूतानिव

 

महाभूतानिव क्रूरदूतान् आदिशति। येशोः जननक्षण एव तस्य माता तं शिशुं गृहीत्वा नदीं प्रविशति। सा नदी भक्त्या मार्गं यच्छति। सः शिशुः सुखरूपेण प्रवाहम् उत्तीर्य पारं गच्छति।

एवमेव यहूदी धर्माचार्यस्य 'मुसा' नाम्नः जन्मकथापि श्रीकृष्णकथामेव संवदति। 'फैरो आ' नामा राजा सर्वानपि नवजातशिशून् मारयितुं आदिदेश। जातमात्र एव 'मुसा' धर्मगुरौ तज्जननी तं पेटिकायामाबध्य नद्यां विमुञ्चति। 'मुसा' शब्दस्य अर्थः कृष्ण इत्येव वर्तते। आभ्यां कर्णकृष्णादिकथानुसारिभ्यां पाश्चात्यपौराणिककथाभ्यां डॉ. ग्रिपित्थमहोदयस्य अभिप्रायः यथार्थः इति ज्ञायते।

लेबेनिन् अन् गिल्बर्ट नाम्नः स्वीडन् देशीयस्य महाकवेः एका कथापि सर्वपाश्चात्यदेशेषु अपि अतीव सुन्दरा सरसा चेति सुप्रसिध्दा वर्तते। साचेत्थं "कश्चन गृहस्थः स्वस्य शिशुं गृहे स्वापयित्वा रक्षणाय स्वगृहश्वानं नियोज्य बहिः अगच्छत्। सः आत्मनः कार्यं समाप्य यदा स्वगृहं प्रत्यागच्छत् तदा गृहद्वारि एव तस्य श्वा रक्तरञ्जितमुखः अतिष्ठत्। तदा स यजमानः 'अनेन शुना मम पुत्रस्य वधं कृत्वा रक्तं पीतम्' इति निश्चित्य तं श्वानं तत्क्षणे एव क्रोधान्धः संहृतवान्। ततः अन्तः आगच्छत्। तत्र तस्य पुत्रः शिशुः सुखेन अस्वपत्। तस्य समीप एव कश्चन वृकः हतः पतितः च आसीत्। तं दृष्ट्वैव वस्तुस्थितेः स्पष्टकल्पना तस्य समभवत्। स्वामिभक्तः सारमेय एव स्वशिशुं संहर्तुं आगतं वृकं हत्वा स्वपुत्रम् अरक्षदिति स्पष्टमासीत्। ईदृशस्वामिनिष्ठस्य शुनः स्वहस्तेनैव मारणं कृतमिति सः पश्चात्तापेन खिन्नः बभूव" इति। इयं खलु कथा पंचतंत्रगतां सर्पनकुलकथां उपजीव्यैव लिखिता इत्यत्र न किमपि प्रमाणपत्रप्रदर्शनम् आवश्यकं पश्यामः।

म्याक्समूलरः स्वनिबंधसंग्रहे 'लाफांते' इत्यस्य पेरेता नामककथां उध्दरति। सा चेत्थं वर्तते। "एकदा पेरेता नाम्नी गोपगृहिणी शिरस उपरि दधिभाण्डानि निक्षिप्य विक्रयार्थं प्रस्थिता। तदा तस्याः मनसि एवं चिन्ताचक्रः सवेगं भ्रमितुम् उपाक्रमत। "इदं च क्षीरं यदि बहुमूल्येन विक्रीयेत तदा तेन शतकुक्कुटांडानि क्रिणीयाम्। ततश्च तेभ्यः शतकुक्कुटेभ्यः अचिरादेव सहस्राधिकाः कुक्कुटाः संपद्येरन्। तैश्च पुनः शताधिकाः गाः विक्रीणीयाम्। परं गोदोहनावसरे तासु गोषु यदि काचिद् गौः मां पदा प्रहरेत् तदा.....इति विचारेण सा स्वं शिरः किञ्चिदिव आकम्पयामास। तेन शिरस्थापितानि सर्वाण्यपि दधिभांडानि अधःपतितानि भग्नानि च समभवन्" इतीयं कथा 'ब्राह्मणस्य भिक्षापात्रम्' इति भारतकथां 'अनागतवतीं चिंतां यः कुर्यात्पूर्वमेव तु। स एव पांडुरः शेते सोमशर्मपिता यथा' इत्यादि पंचतन्त्रीयाः कथाश्च अनुकरोति। पञ्चतन्त्रकथाः श्री एलिझाबेथ महाराज्ञ्याः समये सरथाँमस् नार्थ नाम्नः पण्डितस्य महाप्रयत्न परिणामेन पाश्चात्यराष्ट्रेषु विशेषतश्च इंग्लंडदेशे प्राविशत्। तदैव सुप्रसिद्धाः शेक्स्पीयर प्रभृतयः महाकवयः तत्पंचतन्त्रकथा भारतीयशिबिचक्रवर्तिकथादिकं च उपजीव्यैव मांसतोलनादिसन्दर्भभरितानि नाटकानि, कथाः कादम्बर्यादींश्च जग्रन्थुः। 'लाफान्ते' नामकः महाकविः स्वकथानक प्रारम्भे प्रस्तावनायां एवं स्पष्टमेव सादरं सकृतज्ञताभरं वन्दनम् अभिनन्दनं च विधाय सगौरवमुल्लिखति यत् "मम एतत्कथासंग्रहलेखनस्य सर्वमपि श्रेयः भारतीयानां ज्ञानमुनीश्वराणामेव" इति।

**पञ्चतन्त्रस्य प्रचन्ड प्रपञ्चपर्यटनम्**

ई. १५३३ तमे वर्षे पञ्चतन्त्रस्य प्रथमः अनुवादः पहल

 

वीभाषायां बुरोजोओी नाम्ना कृतं । तस्य अनुवादस्य लोकप्रियता अत्यद्भुता एव अभवत् । ततः ५० वर्षानन्तरं बुद्नामा कश्चित् धर्मगुरुः तस्य पञ्चतन्त्रस्य भाषान्तरं सीरियन् भाषायां अकरोत् । सीरियन् भाषान्तरस्य अरबी भाषायां अलनुकफा नामकः कविः ई. १७५० पुनः भाषांतरं चक्रे । ई. ७८१ अबदुल्-बिन्-हवाज़ि नामकः विद्वान् मूलपहलवीभाषातः पञ्चतन्त्रानुवादस्य अरबी अनुवादं अकरोत् । तस्य च पद्यमयं अनुवादं सहले-बिन्-नववक्त नामा पंडितः चकार । तेन तुष्टः 'यहिया बरं' नामा राजा तस्मै पञ्चतन्त्रस्य पद्यानुवादकारिणे पण्डिताय एकसहस्र-सुवर्णमुद्राणां पारितोषिकं प्रायच्छत् ।

अस्यैव अरबीपञ्चतन्त्रस्य भाषांतराणि रूपांतराणि भावांतराणि वेषांतराणि च पञ्चदशशतकपर्यन्तं पाश्चात्यदेशेषु अतीव सुप्रसिद्धासु ल्याटिन् ग्रीक, जर्मन् स्प्यानिश प्रभृतिभाषासु भूयसा दृश्यन्ते । अत एव मसूदि नामा अरबीसाहित्यस्य इतिहासकारः 'सिन्दबादस्य मूलस्थानं हिन्दुस्थानम्' एव इति स्पष्टं वदति । सर्वदेशे साम्प्रतं सुप्रसिद्धा ईसपनीति कथापि पूर्वं विदापओ (विद्यापती) कथेत्येव नाम्ना प्रसिद्धा आसीत् । एवं भारतीयकथाः एव विश्वभ्रमणं कृत्वा सर्वसामान्यजनेषु मधुरदृष्टांतमुखेन नीतिप्रसारं कृत्वा भारतीयसाहित्यस्य वैशिष्ट्यं प्रादर्शयन् ।



# पुण्यश्लोकः पिप्पलादः

## शनेरपि शनिर्मुनिः

सरस्वतीतीरे पवित्रः एकः आश्रमः विराजते । प्रशांतः वनांतः । एकांतमनोहरं वातावरणम् । तत्रत्या समस्ता प्रकृतिरेव समाधिलीना इव कृतध्याना इव धृतमौना इव च आलक्ष्यते । तस्मिन् च आश्रमे ब्रह्मर्षिः भगवान् दधीचिः तपः तप्यन् अन्तः तिष्ठति । तस्य भार्या सुवर्चा अपि पत्युः पूजा सम्भारान् उपकल्पयन्ती तत्रैव आस्ते ।

तदा सहसा अश्रूयत कुतश्चित् महान् कुतोऽपि कोलाहलः । अचिरादेव च आगताः भयभ्रांताः देवाः । देवासुरसंग्रामे पराजिताः देवाः इन्द्रादयः पलायन्त । राक्षसाः तान् अन्वधावन्त । कथंचित् तेषां दृष्टिं परिहार्य देवाः दधीचमुनेः आश्रमं प्राविशन् । आगत्य प्रणम्य भिया अवदन् "ब्रह्मन् ! राक्षसाः अस्मान् अनुधावन्ति । अतः इदानीं भारभूतानि इमानि नः अस्त्राणि । एतानि भवतां समीपे निक्षिप्य यास्यामः धाविष्यामः । अतः रक्षणीयोऽयं नः निक्षेपः 'शस्त्रास्त्रसंग्रहरूपः' इति । तदा दधीचस्य पत्नी सुवर्चाः पत्युः हितकामनया सविनयं "भो देवाः यदि भवतां शस्त्रनिक्षेपः अस्माभिः स्वीक्रियेत तदा राक्षसा अस्मानेव अभिद्रवंति उपद्रवन्ति च । अतः युष्माकं अस्त्राणि स्वीकृत्यैव गम्यताम्" इति स्पष्टं आह । परं मुनिः देवदाक्षिण्यात् तं निक्षेपं स्वीचकार ।

बहुकालपर्यंतं देवाः न प्रत्यागच्छन् । स्वास्त्राणि च नैव प्रत्यगृण्हन् । राक्षसाः कर्णाकर्णिकया देवास्त्राणां दधीचस्याश्रमे निक्षेपं ज्ञातवन्तः । तानि च अमोघानि दिव्यास्त्राणि अपहर्तुं ते ऐच्छन् । तद् ज्ञात्वा दधीचिः तानि सर्वाणि अपि अस्त्राणि

 

मंत्रप्रभावेण नीरं कृत्वा अपिबत् । ततः स्वपत्न्या सह तपश्चर्यार्थं उत्तरदिशं प्रति गतवान् ।

तत्र हिमालये एकस्मिन्नाश्रमे घोरं तपः चरितुं उपाक्रमत। एकदा तस्य भार्या सुवर्चा जलानयनाय नदीं गतवती आसीत् । तं समयं संसाध्य धूर्ताः वृत्रासुरेण संत्रस्ताः देवाः स्वानि अस्त्राणि गृहीतुं आगताः । ऋषिं स्वशस्त्राणि दातुं प्रार्थयन् । तदा ऋषिः 'सहस्राधिकवर्षाणि यावत् यूयं स्वनिक्षेपं प्रतिगृहीतुं न पुनः गताः । चिरं मार्गं प्रतीक्ष्य तानि सर्वाणि अस्त्राणि मया सलिलीकृत्य पीतानि एव । यदि भवतां ततोऽपि भीकरशस्त्राणां यद्यपेक्षा तदा मम देहस्य अस्थीनि दास्यामि । शङ्करस्य वरबलेन मम अस्थीनि वज्रकल्पान्येव । ततः तीक्ष्णानि शस्त्रास्त्राणि कारयित्वा दानवान् पराजयध्वम्' इति आदिश्य शरीरं ससंतोषं परित्यक्तवान् । तदा देवाः तस्य अस्थीनि आदाय अगच्छन् ।

ततः नदीतटाकाद् गर्भभारात् मन्दं मन्दं आगच्छन्ती गभस्तिनी (सुवर्चा) विलम्बेन आश्रमम् आससाद । तत्रत्यां परिस्थितिं सर्वां ज्ञात्वा सा सर्वानपि देवान् 'निस्संततयो भवंतु सर्वे देवाः' इति अशपत् । ततः परमपतिव्रताशिरोमणिः सा गभस्तिनी सहगमनाय उपचक्रमे । तदा तत्रत्याः ऋषयः 'गर्भिणीस्त्रियः सहगमनं निषिद्धम्' इति अवदन् । तदा सा पतिभक्तिपरायणा सुवर्चाः गभस्तिनी स्वहस्तादेव गर्भगतं पिण्डम् बलाद् आकृष्य तत्रैव आश्रमस्थस्य पिप्पलवृक्षस्योपरि स्थापयामास । स्वयं च चिताम् आरुहत् । अहो पातिवृत्यं अहो त्यागः भारतीय स्त्रीणाम् !

ततः सः बालकः तत्रैव पिप्पलवृक्षे पक्षिभिरेव रक्षितः । तस्यैव वृक्षस्य फलं पिप्पलं स्वादति स्म सः बाल्ये । अत एव

सः जगति पिप्पलाद इति संज्ञाम् अगच्छत् । यदा सः प्रबुद्धः तदा स्वमातापित्रोः दुरन्तमरणस्य देवा एव कारणम् इति ज्ञातवान् । तदा क्रोधेन सः कामपि कृत्यां वडवानाम्नीं सृष्ट्वा देवध्वंसनार्थं प्रेरयामास । तदा सम्भ्रान्ताः देवाः श्रीशङ्करं शरणम् अगच्छन् । तदा सर्वलोकशिवंकरः शङ्करः मध्यस्थो भूत्वा देवानां पिप्पलादस्य च वैरं शामयामास स्नेहं च कारयामास । तदा पिप्पलादः स्वमातापितरौ दर्शयितुं देवान् प्रार्थयामास । तदा देवाः तं पिप्पलादं स्वर्गं सदेहमेव अनयन् । तत्र च सः पिप्पलादः 'मम माता कीदृशी भवेत्? मम पिता नाम कीदृशः पदार्थः !' इति द्रष्टुं अतीव कुतूहलेन स्वर्गं गतवान् । तत्र च देवैः दर्शितौ स्वपितरौ दृष्ट्वा सः अतीव आनन्दोद्रेकमेव अनुभूतवान् । संतोषातिरेकेण पितरौ आश्लिष्य सः अपृच्छत् 'भवतोः दुरन्तमरणस्य देवा एव कारणमिति श्रुणोमि अहं किमेतत् सत्यम् ?' तदा तौ ऊचतुः "वत्स ! नात्र कोऽपि कारणम् । किं तु मम ग्रहचार एव" इति । "कोऽसौ ग्रहः" अपृच्छत् पिप्पलादः । "कोऽन्यः ? शनीश्वर एव" इति उत्तरितवान् पिता । तदा क्रोधान्धः पिप्पलादः 'सर्वलोकपीडाकारकं तं शनिमेव विध्वंसयामि' इति वीरावेशेन आकाशस्थं शनिम् आकृष्य अधःपातयामास । एवं स्वं प्रहर्तुम् उद्यतं तं पिप्पलादं ब्रह्मर्षिं दृष्ट्वा भयविव्हलः शनीश्वरः तमेव शरणं गत्वा प्राणभिक्षां ययाचे । तदा करुणापूर्णः पिप्पलादः "द्वादशवर्षपर्यंतं कस्यापि बालकस्य लोके शनिपीडा मा भवतु" इति आदिष्टवान् । तदा शनिः 'मुने भवतः आज्ञानुसारं द्वादशवर्षाद् अवरं न कमपि पुरुषं लोके अहं पीडयिष्यामि । कृपया मम इदानीं जीवदानं देही'ति दैन्येन प्रार्थयामास । तदा पितुराज्ञया पिप्पलादः शनिग्रहम् अमुञ्चत् ।

तदा तस्य पितरौ संसेव्य 'मया कीदृशी पित्रोः सेवा कार्या ? इति अपृच्छत् । तदा तौ आहतुः– "वत्स ! बाल्य एव विरक्तोऽसि । वंशाभिवृद्धिः अस्माकं कथं भवेत् । अतः भूलोकं गत्वा कामपि सुन्दरीं कन्यां स्वीकुरु । गृहस्थधर्मं च अङ्गीकुरु । पितृऋणाच्च मुक्तो भव' इति ।

'ओमिति' पित्रोः आज्ञां शिरसा धारयित्वा पिप्पलादः भूमिं प्रत्यागतः । अत्र एकदा सः पुष्पभद्रा नामकनदीतीरं प्रति स्नानार्थं अगच्छत् । तदा तत्र भूलोकसार्वभौमस्य महाराजस्य अनरण्यस्य पुत्री राजकुमारी पद्मावती सखीभिः सह जलक्रीडार्थं आगता आसीत् । पिप्पलादश्च पद्मनेत्रां पद्मपाणिं पद्मपादां तां पद्मपेलवप्रकृतिं पद्मावतीं दृष्ट्वा संमुग्धो भूत्वा महाराजं तां कन्यां अयाचत । कस्मैचन श्रीमते राजकुमाराय प्रदेया इति तस्य राज्ञः इच्छा आसीत् । अतः प्रथमं सः पद्मावतीं पिप्पलादाय दातुं संमतिं नैव प्रादर्शयत् । परं पश्चात् तस्य महिमानं तपःसामर्थ्यं मन्त्रसिद्धिं च ज्ञात्वा स्वसंतोषेण पुत्रीं प्रायच्छत् ।

**" पद्मप्रिये पद्मिनि पद्महस्ते पद्मानने पद्मदलायताक्षि ।**
**मम प्रिये मौनिमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ "**

इत्यादिसरसालापैः तां पद्मावतीं रमयन् गृहस्थाश्रमं सार्थकीचकार । एवं सरससंसारयात्रां निर्वहतोः पद्मावतीपिप्पलादयोः शतपुत्राः समभवन् । अयं पिप्पलादः गौतमपुत्रीं गौतमीनाम्नीं कामपि एकां भार्यां उपयेमे इति ब्रह्माण्डपुराणाद् ज्ञायते ।

अयं च पिप्पलादः अथर्वणवेदस्य एकस्याः शाखायाः प्रवर्तकः मन्त्रद्रष्टा महामुनिरिति सर्वैः बहुमान्यते । इयं च आथर्वणी पैप्पलादसंहिता काश्मीरात् ब्लूहरेण आविष्कृता । प्रकटीकृता च तस्याः स्वरूपं प्रकाशयता 'ब्लूमफील्ड' महोदयेन ।

उपनिषत्प्रस्थानेऽपि अस्य विशिष्टं स्थानं सातिशयं च मानं वरीवर्ति । ब्रह्मज्ञानिषु अतीव श्रेष्ठतमं अमुं पिप्पलादं कदाचित् ब्रह्मजिज्ञासवः षड् ब्राह्मणाः समित्पाणयः समुपसृत्य ब्रह्मोपदेशं कर्तुं प्रार्थयन्त । तदाऽसौ पिप्पलादः 'पुनरेकवर्षं यावत् अखण्डब्रह्मचर्येण सुश्रद्धया तपोनुष्ठानं कर्तुं तानादिशत् । तदा-ज्ञानुसारं तैः संवत्सरपर्यन्तं तपस्तप्तं ब्रह्मचर्येण । ततस्ते एकैक-शस्तमेनं समुपगत्य अपृच्छन् । तदा तेन तेषां षण्णामपि प्रश्नानां साधु समाधानकारकं च उत्तरं प्रदत्तम् । सैव च अद्यापि षट्-प्रश्नोपनिषन्नाम्ना प्रसिद्धा वर्तते । अस्यां उपनिषदि तत्वदर्शी भगवान् पिप्पलादः श्रीवासुदेवरूपिणः हरेः सर्वेश्वरत्वं तथा मुख्यप्राणस्यापि ततः सर्वश्रेष्ठत्वं प्रतिपादयति । एतत् प्रश्न-कर्तारः षडपि ऋषयः स्वयं ब्रह्मनिष्ठाः योग्यतासम्पन्ना एवास-न्नित्याह एषोपनिषत्– " ते हैते ब्रह्मपराः ब्रह्मनिष्ठाः परं ब्रह्म अन्वेषमाणाः एषह वै तत्सर्वं वक्ष्यतीति तेह समित्पाणयो भग-वन्तं पिप्पलादम् उपसन्नाः । " उपसृत्य ते ऋषि क्रमेण " प्रजा-पतेः सकाशात् प्रकृतिप्राणयोः सृष्टिं, इतरेन्द्रियापेक्षया प्राणस्य प्राधान्यं, प्राणादीनां स्वरूपविभागौ, स्वप्नसुषुप्ती, ओङ्कारस्य ध्यानं, मनुष्यस्य षोडशकलाश्च अधिकृत्य षट् प्रश्नान् अकुर्वन् । एताषां षट्प्रश्नानां उत्तररूपेण भगवता पिप्पलादेन ब्रह्मरहस्य-मेव आविष्कृतम् । अनेकसरससुन्दरदृष्टांतोपन्यासपूर्वकं तथा कथामुखान्तरं च अत्र प्राणशक्तेः मुख्यत्वं साधु व्यवस्थापितं* । अत्रत्य प्रश्नोत्तरयोः रहस्यमीमांसां अङ्कांतरे सुविशदं करिष्याम, इत्याश्वास्य लेखपरिणाहभिया अत्रैव विरिरंसामः ।

* अस्य पिप्पलादस्य ब्रह्मज्ञानिश्रेष्ठत्वात् मोक्षशास्त्रस्य पैप्पलाद इत्येव नाम उपनिषत्काले रूढमासीदिति ज्ञायते । गर्भोनिषदः उपसंहारवाक्यं दृश्यतां "पैप्पलादं मोक्षशास्त्रं पैप्पलादं मोक्षशास्त्रमिति सहनाववतु ।

# बाल्येन तिष्ठासेत्

गवां ऊधसः यावदिच्छं दुग्धं दुहन्ति । तत्राप्यपर्याप्तौ पुनरपि हस्तौ व्यापारयित्वा ततोप्यधिकं दोहनं सुकरम् । एवं यावत्तावत् क्षीरं गोस्तनात् रेचयितुं प्रभवन्ति जनाः । परन्तु तत्र पश्यत । अपेक्षितादधिकं प्रसृतिपरिमितं वा पयः बहिर्निगतं पुनः ऊधसोऽन्तर्गमयितुं कश्शक्नुयात् ।

एवमेव आगामिनं कालं अलङ्कर्तुं अवन्ध्ययितुं अथवा नैरर्थक्येन दूषयितुं एकैकोऽपि पुरुषः स्वपूर्वपुण्यपापविभवेन प्रभवेत् । नतु कश्चिदपि कदापि कथायामपि आकर्णितस्तादृशः यस्त्वतीतं अपि कालं स्वसामर्थ्यसम्पत्त्या विपरिणतं कुर्यात् । गतन्तु गतमेव हि । गतं निरर्थकं वीक्ष्य नानुशोचन्ति पण्डिताः। अनागतविधानन्तु कर्तव्यं कुशलेप्सुभिः । उत्तिष्ठत ! जाग्रत ! प्राप्य वरान्निबोधत ।

आयुः परिस्रवति भिन्नघटादिवाम्भः । तत्रैकैकः क्षणः अमूल्यः । यथा मनुजस्य जन्म ज्यायो भवेत्, तथा यत्नो विधातव्यः । जन्मनस्साफल्यं भगवत्तोषणेन भविष्यति । तोषितश्च भगवान् सर्वं समाश्रितानां संविधास्यति । "ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ॥ ददाति ध्यायिनां नित्यं अपवर्गप्रदो हरिः ॥" तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम् ।

तथा च भगवतस्समाराधनीयत्वे शतशस्स्थापिते, तदेतदाराधनं किंप्रकारं इति विवेकिभिर्भूत्वा अस्माभिः विमृष्टव्यम् । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । "ज्ञानीत्वात्मैव मे मतं" इति कृष्णः कथयति । श्रुतयः श्रावयन्तिः– "ज्ञाज्ञसाधारण्येन जगतस्सर्वस्य भगवानात्मे"ति । तदेतत् श्रुतीनां मतमिव । श्रीकृष्णमतन्तु "भगवतोऽपि मम अपरः कश्चिदात्माऽस्ति । सोयं

ज्ञानी पुमानेव " इति । एतेन भगवदाशयः कीदृक् ? ज्ञानिषु भगवद्हृदयं कियदवधि स्निह्यति? येन "ज्ञानी मे आत्मा" इति स्वमतं भगवान् उच्चैर्घोषयेत् । परामृशत ।

भक्तवरः कश्चित् स्वकीयेन ज्ञानगर्वेण सात्विकेन प्रचोदितः, स्वस्मै सेवावकाशं अदित्सन्तं, श्रीवेङ्कटाद्रिनिलयं, श्रीनिवासं, भगवन्तं एवं व्यजिज्ञपत्:– 'परैः परिभवे प्राप्ते मदधीना तव स्थितिः ' इति । सर्वथा भूतार्था एषा सूक्तिः । सर्वरक्षकमपि भगवन्तं मूर्खमुखात्, परमत पातालकुहरात् ज्ञानिनां वरा गुरव एव हि पान्ति, करग्राहं गृण्हन्त उत्तारयन्ति च । ततश्च प्राज्ञाक्षीना भगवतः स्थितिरिति निश्चप्रचम् ।

नात्रावसरे असकृत्क्रियमाणो ज्ञानशब्दव्यवहारः वेदान्तज्ञानादृते अपरं ज्ञानव्यपदेशभाजनं किञ्चिदपि परामृशति । अन्यास्तु विद्याश्शिल्पनैपुणं भविष्यन्ति । नितरां उदरभरणे अलं भविष्यन्ति । शरीरपोषणेन संसारकारागृहं संवर्ध्य जीवं क्लेशयन्ति । वेदान्तविद्यैवैका विद्याव्यपदेशमर्हति " न वेदान्ताच्छास्त्रं न मधुमथनात्तत्वमधिकं न सत्वादारोग्यं न बुधभजनाद् बोधजनकम् । " इति महदुक्तिर्महोक्तिश्च । अत्र अधिकमिति सर्वत्र वाक्ये अन्वेति । एतदभिप्रायमेव च " सा विद्या या विमुक्तये " " तत् ज्ञानं, अज्ञानमतोन्यदुक्तम् " इत्यादिपुराणवचनम् ।

नैतत् ज्ञानं आपणे क्रय्यं । अपितु अशिथिलया गुरुभक्त्या अतिकठिनेन आचार्यकुलवासेन सुप्रापमेतत् । तत्र विद्यार्थिना बहूनि द्वंद्वानि तितिक्षणीयानि । आचार्याज्ञाः निर्वर्तयितव्याः । आचार्यपुत्रपत्न्यादिभिरपि परवान् भवति तत्र विद्यार्थी । सुवर्णस्य सुवर्णता तदा भवति । यदा सुवर्णकारः तत् अग्नौ निक्षिप्य, अयोमुखे अभिहत्य, रन्ध्रेण आकृष्य बहुधा क्लेशयेत् । नानुप-

मृद्य प्रादुर्भावोस्ति कस्यचित् । आगमश्चानुशास्ति "आचार्य-कुले यावज्जीवमात्मानमवसादयेत्" इति ।

ततश्च यावज्जीवं विद्यार्थीभूय बहुभ्यो महद्भ्यः बहुधा श्रोतव्यं सच्छास्त्रादिकम् । गुरुकुले न प्रौढता प्रदर्शनीया । तस्मादेव शीर्षके "बाल्येन तिष्ठासेदि"ति वचनमुदाहृतम् । यथा धनिकानां स्वेषु न कदापि पूर्णकामत्वतृप्तिः । "स्थितेनालम् । नेतस्सम्पादनीयं किंचिदवशिष्यते" इति वैराग्योदयोपि न । उपर्युपरि धनाशैव विवर्धते । एवमेव विद्यासंपादनेपि नीतिः प्रकाशते । न कदापि विरन्तव्यम् । नाकाले स्वपितव्यम् । नालस्याय पदं देयम् । उत्तरोत्तरं आशा अभिवर्धनीया । "इदमस्तीदमपि मे भविष्यति न संशयः" इति अश्रान्तबद्धश्रद्धः मधुकर इव कुसुमानि नानाग्रन्थान् अयं विद्यार्थी परिचेतुमर्हति । तस्मादेव विद्याद्रविणयोः एकरूपं सम्पादनप्रकारं नीतिविदः स्मरन्ति । "क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।" इति ।

आचार्यसकाशादधिगताया अमूल्याया विद्यायाः मूल्यं तु आचार्यपादपदभक्तिरेकैव । तेन सदयं सानुग्रहं च दत्तायाः विद्यायाः, प्राप्तविद्यस्य स्वस्य विद्यावदान्यस्य मान्यतमाचार्यस्य च, सदृशं, अनुगुणं, अनुरूपं च प्रत्युपकारं सर्वज्ञोऽपि ज्ञातुं न प्रभवेत् । सर्वनिर्माणनिपुणोपि न निर्मातुं । किमुत अल्पज्ञानशक्तयो वयम् ।

यदपि प्रोक्तं महाकविना:– "गुरुः प्राज्ञे शिष्ये यथैव, तथा जडे, नच खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।" गुरुरुपदिशति । शिष्यास्सर्वे संभूय शृण्वन्ति मन्दा मेधाविनश्च । तत्रोत्तरः विद्यापारङ्गतः स्वमेधया आचार्योक्तं सर्वं गृण्हन् प्रकाशते । पूर्वस्तु मतिमांद्यात् उक्तं अप्रतिग्रण्हन् अपक्षीयते । तदे-

# सनातनधर्मलोकपरिचयः

ले. पं. श्री दीनानाथशर्मा सारस्वतः विद्यावागीशः, विद्याभूषणः, विद्यानिधिः, प्रिन्सिपाल सं. हिं. महाविद्यालय, रामदल दरीबाकला, दिल्ली.

मधुरवाण्याः प्राचीनपाठकानां स्मृतं स्यात् यत् मामकीना निबन्धा— यदाहं मुलताने आसम्— पत्रिकायां अस्यां नियमतः प्रकाश्यन्ते स्म । परं तत्र पाकिस्ताननिर्मितिवशात् देशभङ्गोऽजनि । ततो मम खण्डिते हिंदुस्ताने समागमनं जातम् । ततोऽत्र वृत्तिलाभलाप्रभृतिकारणकलापवशतो निबन्धप्रेषणस्य अवकाश एव नावाप्यते । इतश्च अहमत्र आगत्य ग्रन्थमालाप्रकाशनकर्मणि व्यापृतोऽभवम् ।

धर्मबद्धश्रद्धाः पाठकमहानुभावाः विदन्त्येव समयस्य भीषणताम् । अद्यत्वे सनातनधर्मस्य प्रत्येकविषयः शङ्कास्पृशा दृशा विलोक्यते । तत्र सोल्लुण्ठनोक्तयो वितन्यन्ते । महत्या च आरभट्या तदीयं निराकरणं क्रियते । तदीया अवैदिकता प्रख्याप्यते । इदं निध्याय कस्य सचेतसो धार्मिकस्य चेतो न दोदुल्यते— इति विमृश्य अस्माभिः सनातनधर्मस्य आक्षेपास्पदानां विषयाणां वेदादिप्राचीन-

---

तत् तत्तद्भाग्यकृतम् । नहि गुरुः पूर्वस्य ज्ञाने शक्ति उत्पादयति अपरस्य तां अपहरति । प्राज्ञे शिष्ये यथा, तथैव जडेपि आचार्योपदेशः प्रवर्तते । "प्रभवति मणिः बिम्बग्राहे न मृदां चयः । दीपप्रभां मणिः स्वच्छस्वभावतया गृण्हाति । तादृशस्वभाववैधुयात् मृत्पिण्डो नैव तां गृण्हाति । न तत्र दीपप्रभायाः अपराधः कश्चिदस्ति । अपितु तत्तद्वस्तुस्वभाव एव । इति ।

तदेतत् कविवाक्यं यदि परिशील्यते, तदा शिष्यस्य गुरौ कृतज्ञता भक्तिः इत्यादिकं व्यर्थमेवेति आपतेत् । विद्याग्रहण तदभावयोश्शिष्यस्वभावायत्तत्वप्रतिपादनात् । तथापि कविवाक्यमेतत् सर्वेषु शिष्येषु पक्षपातराहित्यं प्रतिपादयति । तस्मात् गुरौ भक्तिः कार्या । गुरुकुले यावज्जीवं बाल्येन तिष्ठासेत् ।

साहित्ये सत्ता विद्यते वा नवा— इति द्रष्टुं वेदोपवेदेषु वेदांगोपांगेषु च अवगाहनं विहितम् । तस्मिन् साहित्यार्णवे अस्माभिः मुक्ताः अधिगताः कतिचिद् । अयमेवासौ दशसहस्रपृष्ठनिबद्धः श्री सनातनधर्मालोको नाम हिंदीभाषामयः बृहद्ग्रन्थः ।

तस्य सर्वस्य प्रकाशने लक्ष्मीदेवीकृपापात्रताऽभाववशाद् अक्षमतां दृष्ट्वा स महाग्रन्थो ग्रन्थमालारूपेण प्रकाशयितुमुपाक्रांतोऽस्ति । तस्य च सर्वाणि विंशतिपुष्पाणि विकसेयुः । तत्र इदानीं पञ्चपुष्पाणि विकासितानि समजनिषत जनताजनार्दनसाहाय्यात् ।

अस्याः संरक्षकाः एकसहस्ररूप्यकदानेन भवितुमर्हन्ति । तेषां च चित्रं प्रकाश्यते । प्रत्येकप्रकाशने च नामप्रकाशनं वोभवीति । सहायकाश्च न्यूनान्यूनं शतरूप्यकदानेन भवितुमर्हेयुः । ये चात्र अक्षमाः पुष्पाणां क्रयणक्रापणाभ्यामेव अस्या ग्रन्थमालायाः प्रचारं कर्तुमीशीरन् ।

अस्य प्रस्तुते तृतीयपुष्पे स्त्रीशूद्राणां वैदिकाधिकारो विद्यते वा नवा— इति विषये विमृष्टमस्ति सार्धत्रिशतपृष्ठेषु । 'यथेमां वाचं कल्याणीम्' इति वेदमन्त्रस्य को नाम वास्तविकार्थः? 'ब्रह्मचर्येण कन्या' इति मन्त्रस्य कोऽभिप्रायः एतदादिकविषयमवलम्ब्य पश्चात्पूर्वपक्षाः समाहिताः सन्ति । 'ऐतरेय महिदासः, ऐलूषकवषः, जाबालः, कक्षीवान्, पौराणिकसूतः, शबरी, वाल्मीकिः, इमे किं शूद्रा आसन् अशूद्रा वा इति विषयेऽप्यत्र सप्रमाणोपपत्तिविवेचना विहिता विद्यते । एतद्विषयकजिज्ञासूनां तर्कप्रमाणोहापोहरसिकानां च इदं तृतीयं पुष्पं महोपकारकं सिध्येत् । एतेन सह प्रथमद्वितीयपुष्पे अमूल्यं प्राप्येते । तयोः 'नमस्ते' विषये संक्षिप्तो विचारोऽस्ति ।

ततस्तुरीयं पुष्पं पञ्चशतपृष्ठबद्धं अस्ति । अस्मिन् सनातनधर्मस्य विंशतिः प्रसिद्धविषया मीमांसिताः सन्ति । अस्माकं कृते प्रयुज्यमानो 'हिंदु' शब्दो वैदिकोऽवैदिको वा, वेदविषये अद्यतनानां विदुषां महती भ्रांतिः, वेदस्वरूपनिरूपणम् इति विषयान्निरूप्य वेदादिशास्त्रेषु वर्णव्यवस्था जन्मना वा गुणकर्मणा वा इति विशदय्य 'ब्राह्मणोऽस्य मुखमासीद्' इति वेदमन्त्रे वर्णव्यवस्थायां किमभिमतम् इति साधु विवेचितम् ।

  



ततो गुणकर्मणा वर्णव्यवस्थया काः काः उच्छृङ्खलताः प्रवर्तेरन्- इति विषये प्रकाशं कृत्वा वर्णव्यवस्थाविषयककतिचिदाक्षेपेषु विमर्श उपस्थापितोऽस्ति। ततश्च मृतकश्राद्धस्य ब्राह्मणभोजनस्य च वैदिकतां वैज्ञानिकतां च निरूप्य श्राद्धविषयकाः शङ्काः समाहिताः सन्ति। तदग्रे 'मूर्तिपूजा वेदाभिमता अवैदिकी वा? अवतारवादे वेदस्य अनुग्रहो नास्ति अस्ति वा, इति प्रकाश्य 'किं विद्वांसो मनुष्या एव देवाः?' इति विषये प्रतिवादिनामभिप्रायाः निरस्ताः।

ततश्च 'शंनो देवी' प्रभृतिमन्त्राः शनैश्चरादिग्रहाणां विषये कथं भवितुमर्हन्ति, ग्रहणं तदशौचं च किं विज्ञानं कलयति- इत्यादिविषये सम्यग् विमृश्य ५१२ पृष्ठेषु पुस्तकं सम्पूरितम्।

ततश्च पञ्चमं पुष्पं नवशतपृष्ठबद्धमस्ति। अस्य प्रकाशनं नितरां मनोहरम्। अस्मिन् शिखा-यज्ञोपवीत-कच्छादिविषये संस्कारांतरेषु च वैज्ञानिका विमर्शाः दर्शिताः सन्ति। ततः प्रातरारभ्य रात्रिपर्यन्तमादिष्टानां आचाराणां वैज्ञानिकरहस्यपूर्णता दर्शिता। अनन्तरं दीपमाला होलिकादीनां च वैज्ञानिकरहस्यानि दर्शितानि। महीधरभाष्यसम्बन्धे अश्वमेधमन्त्रव्याख्यायां ये आक्षेपा विधीयन्ते तत्रापि सप्रमाणं विवेचना कृतास्ति। एवमत्र १२५ विषयाणां मीमांसा प्रदर्शितास्ति।

एवमग्रे पुष्पान्तराणि प्रकाश्यमानानि सन्ति। यदि पाठकाः एषां पुष्पाणां क्रयणक्रापणादिदाने निरता भवेयुः तर्हि प्रकाशयिष्यमाणा इयं ग्रन्थमाला शीघ्रं पूर्तिमाप्नुयात्। ततश्च सनातनधर्मविषयकाक्षेपाणां समाप्तिः स्यात्।

आशास्यते मधुरवाणीपाठकानां ग्रन्थमालायामस्यां प्रणिधानमापतेत्। अग्रे किञ्चिदवकाशमासाद्य मधुरवाणीसेवापि विधीयते।

इयं मधुरवाणी शके१९५७ उपक्रान्ताऽऽसीत्। एवमस्या २१ वर्षाणि जातानि। अस्मिन्नवसरे तया द्विजजन्मानि गृहीतानि; पाठकानां च उचितमेतत् यत् ते अस्याः पोषका भूत्वा अस्याश्चिरजीवने कारणानि स्युः। एतेन गीर्वाणवाणीसमुपबृंहणं स्यात् स्वाराज्येऽस्मिन् इति प्रार्थ्य विरम्यते।



Regd. No. B 7171



# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणकपोस्टटिकीटप्रेषणं कार्यम् ।



व्ही. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डरद्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्यमयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

BOOK-POST

To,

No. 348
Shri Shankarsev Vidyalankar
Shantikutir Gurukul Kangri
Dist.

If addressee is not found please retern to sender.

पंढरीनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग (कर्नाटक)

Printed at the Hombali Printery, Gadag by H. S. Hombali and Published by Pandharinath Galagali at Gadag.